आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ११३

पालघाट्नारायणशास्त्रिकृतमखिवर्यभूषणाख्यटिप्पणी-
संवलितस्वकृतमध्वमतविध्वंसनाख्यव्या-
ख्यासनाथीकृतं
श्रीमच्छंकरगणांशसंभूताद्वैतविद्याचार्यरङ्गराजाध्वरिसूनु-
श्रीमदप्पय्यदीक्षितविरचितं-

# मध्वतन्त्रमुखमर्दनम् ।

तदिदं

वे० शा० सं० सूर्युपाह्वकर्नाटकरामचन्द्रशास्त्रिभिः
प्रस्तावनया विभूष्य संशोधितम् ।

एतत्पुस्तकं
बी. ए. इत्युपपदधारिभिः

विनायक गणेश आपटे

इत्येतैः
पुण्याख्यपत्तने
श्रीमन् ' महादेव चिमणाजी आपटे ' इत्यभिधेय-
महाभागप्रतिष्ठापिते

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा
प्रकाशितम् ।

---

शालिवाहनशकाब्दाः १८६१ ।
ख्रिस्ताब्दाः १९४० ।

---



मूल्यं सार्धो रूपकः ( १८ ) ।

# सव्याख्यस्य सटिप्पनीकस्य मध्वतन्त्रमुखमर्दनस्य
## विषयानुक्रमणिका ।

श्लोके । विषयः ।



प्रकाशकः ।



॥ श्रीः ॥

## ॥ प्रस्तावना ॥

शङ्कारूपेण मच्चित्तं पङ्कीकृतमभूद्यया ।
किंकरी यस्य सा माया शंकराचार्यमाश्रये ॥

अयि सागराम्बरामण्डलालंकारायमाणस्फीतगुणा विपश्चिन्मणयः, नाज्ञातपूर्वमिदमावेदनीयं, यदिह विरिञ्चिप्रपञ्चे सर्वोऽपि परमसुखावाप्तिपूर्वकात्यन्तिकदुःखनिवृत्त्यर्थं स्वभावत एव प्रवर्तत इति । परंतु नैकभवभ्रमणसमासादितसकलाकुशलकलापस्य सांसारिकप्राणिजातस्य जरामरणादिदोषकलुषितस्यैतादृशदुःखनिवृत्तेरयमेव प्रकृष्ट उपाय इत्येवं निश्चयासंभवेन यस्मिन्कस्मिन्नपि दुःखसाधन एवाऽऽपातरमणीयतामवलोक्यैं सुखसाधनत्वभ्रान्त्या प्रवर्तमानस्यात एव पुनः पुनः दुःखमहोदधौ निपतत उद्दिधीर्षया प्रवृत्ता मातापितृसहस्रेभ्योऽप्यधिकतरवात्सल्यशालिनी भगवती श्रुतिर्यथाधिकारं कर्मोपासनाज्ञानानि न्यरुरूपत् । अथानन्तरूपायास्तस्या दुरधिगमार्थानालोचयद्भिर्महर्षिभिरल्पमतीनामनुग्रहाय स्मृतयः प्रणीताः । अत एव सनातनो वैदिको धर्मः श्रौतः स्मार्त इति व्यपदेशं भेजे । अयमेव धर्मः चतुर्षु पुरुषार्थेषु प्रथमः । द्वितीयतृतीयावर्थकामाख्यौ पुरुषार्थौ लोकत एवावगन्तुं शक्याविति न तदधिगमाय विशेषतो यत्नः कृतः प्राचीनैः । तदेतत् पुरुषार्थत्रयमपि सातिशयं क्षयिष्णु चेति निर्विवादं समस्तास्तिकमहाशयानां, मोक्षाख्यः चतुर्थः पुरुषार्थः परमो नित्य इति च । स च नित्यनिरतिशयब्रह्मानन्दाविर्भावलक्षणो निखिलशास्त्रमूर्धन्यभूताद्वेदान्तादेवोपनिषल्लक्षणाद्भवतीति निःशङ्कं प्रतिपादयामः । सोऽप्यतिगभीरार्थकतयाऽल्पधिषणैर्दुर्विज्ञेय इति समालोच्य परमकारुणिको भगवान्नारायणः महर्षिबादरायणरूपेणावतीर्य शारीरकमीमांसामसूत्रयत् । एतावता निर्मलो निष्कण्टकश्च कृत औपनिषदः पन्थाः ।

तदनु कालमाहात्म्येन प्राणिनां बुद्धिमान्द्याद् ब्रह्मसूत्राणां यथावदर्थानधिगमेन स्वार्थाद्विप्लाव्यान्यथानीयमानानां मुमुक्षुजनतोपकृतये कृपालुना भगवता भूतभावनेन शंकरेण श्रीशंकराचार्यरूपेणावतीर्य विरचय्य भाष्यं पुनरुज्जीवितः सनातनो मार्ग इति सर्वथा समुद्धृतो मुमुक्षुजननिवहः। यद्यपि तेषां श्रीशंकराचार्याणामुपरि रामानुजश्रीकण्ठमध्ववल्लभनिम्बार्कप्रभृतिभिराचार्यैर्यथास्वमति भाष्याणि विरचितानि स्वस्वपक्षोपोद्बलकानि परपक्षप्रतिक्षेपकाणि दरी-

दृश्यन्ते । सर्वैरपि यावद्बुद्धिबलं महान्तमायासमङ्गीकृत्य सूत्राण्यन्यथाकृत्यापि स्वस्वपक्षदृढीकरणाय परपक्षासारताप्रदर्शनायानेका युक्तय उपन्यस्ताः । अथाप्येतानि भाष्याण्यालोचयद्भिः " किं सूत्राणां यादृशोऽर्थः प्रतिपादितस्तैस्तैर्भाष्यकृद्भिः स सर्वोऽपि सूत्रकृत्तात्पर्यविषय उतान्यतमः कश्चित् " इति कृते विमर्शे एकतम एव सूत्रतात्पर्यविषयो न परस्परविरुद्धः सर्वोऽपीति भवति निश्चयः । तथा हि—वैष्णवाः किल विष्णुमेव परं मन्वते, शिवादीनां तद्दास्यं चाभ्युपयन्ति । शैवा हि शिवमेव परमुद्घोषयन्ति, अपरान् तदधीनान् ब्रुवते । एवमेव सर्वत्र परस्परविरुद्धानि रामानुजीयादिद्वैतमतानि न कथमपि सूत्राक्षरारूढानीति वक्तुं शक्यम् । यद्यपि सूत्रस्य विश्वतोमुखत्वेन सर्वोऽपि सूत्रार्थ इति वक्तुं सुशकम्, अथापि न तद्विपश्चिच्चेतसां चमत्कारमावहति । यदि सर्वोऽपि सूत्रार्थस्तर्हि " मध्वादिष्वसंभवादनधिकारं जैमिनिः " इति सूत्रस्य मध्वरामानुजादीनां ब्रह्मविद्यायां नास्त्यधिकारः । असम्भवात्—इति जैमिनिः, इत्यर्थं कश्चिद्ब्रूयात् । अपरः " भावं तु बादरायणोऽस्ति हि" इति सूत्रस्य—यद्यपि नास्ति तेषामधिकारः, अथापि यथाकथंचिदधिकारस्य भावं बादरायणोऽनुमन्यते—इत्यर्थं वदेत् । एवं सति सूत्रार्थ आकुलीकृतो भवेत् । सूत्राणां शिवविष्ण्वादिप्रतिपादकत्वे " अथातो विष्णुजिज्ञासा " "शिवजिज्ञासा" इत्येवमेव सूत्रारम्भो भवेत् । न तथा दृश्यते । अतो वक्तव्यमेक एव परमसुखसाधकोऽर्थः सूत्राणामिति । ततः परिशेषाच्छ्रीशंकरभगवत्कृतभाष्यानुसार्येव सूत्रकृत्तात्पर्यविषय इति निश्चिनुमः । किंच कपिलकणादादिभिर्दर्शनकृद्भिः परपक्षदूषणप्रस्तावे—अद्वैतमेव वेदान्तमतत्वेनानूद्य दूषितं, तत्समये भगवान् बादरायण एव वेदान्ती नान्यः कश्चन । न हि तदन्येन केनापि वेदान्तार्थनिर्णयाय सूत्राणि कृतानि सन्ति । अतोऽपि व्यासस्याद्वैत एव तात्पर्यं कपिलादिमहर्षिसाक्षिकं निर्भयमुद्घोषयामः । व्यासभगवतः अद्वैत एव तात्पर्यमित्येतद्दीक्षितवंशजैरेव कृते व्यासतात्पर्यनिर्णये विस्तरशो द्रष्टव्यम् । लक्ष्मीपतेर्नारारायणस्याऽऽशयं को वाऽन्यः प्रकटीकर्तुं पारयेद्दृते भवानीशात् । इत्यलं पल्लवितेन ।

यद्यपि रामानुजश्रीकण्ठमध्वादिभाष्याणि कियत्यप्यंशे सनातनधर्मानुसारीण्येव, यथा विष्णवाद्युपासनासु, अथापि बहुत्र वैदिकमर्यादाया उल्लङ्घनं दरीदृश्यते यथा तप्तमुद्राङ्कनादौ, तप्तमुद्रादीनां धर्मशास्त्रनिषिद्धत्वं भट्टोजीदी-

क्षितकृततत्त्वकौस्तुभभूमिकायां प्रकाशयिष्यमाणायां धर्मशास्त्रवचनोदाहरणेन निपुणतरमुपपादयिष्यामः। दीक्षितवर्यैरपि मध्वतन्त्रमुखमर्दने स्पष्टमभिहितम्।

तथाऽप्यानन्दतीर्थीयं मतमग्राह्यमेव नः।
यत्र वैदिकमर्यादा भूयस्याकुलतां गता ॥ इति।

एवं पाञ्चरात्राद्यागमानुसारेणोपनिषदर्थानां मलिनीकरणेन जनतां कष्टामधोगतिं प्रापयतो रामानुजश्रीकण्ठमध्वादीनवलोक्य श्रीमदप्पय्यदीक्षितवर्यमधुसूदनसरस्वत्यादिभिः सत्यपि भगवत्पादादिकृते भाष्यभामत्यादिग्रन्थजातेऽद्वैततत्त्वप्रकाशके परमतासारताप्रदर्शनं विना मुमुक्षुजनताया निष्कम्पमद्वैततत्त्वे न प्रविविक्षति मन इति मनीषया रामानुजशृङ्गभङ्ग—मध्वतन्त्रमुखमर्दनाद्वैतसिद्ध्यद्वैतरक्षणसिद्धान्तबिन्दुतत्त्वकौस्तुभादयो ग्रन्था निरमायिषत। तत्र दीक्षितेन्द्रविरचिते "मध्वतन्त्रमुखमर्दने" प्रायो मध्वमतासारतैव प्रतिपादिता। यद्वयं प्रकाशयितुं प्रवृत्ताः सोऽयं ग्रन्थः पद्यरूपेण राजते। तदनु तैरेवाल्पज्ञदुर्विज्ञेयतामवलोक्य व्याख्यातम्। तच्च व्याख्यानं "मध्वमतविध्वंसनम्" इति नाम्ना प्रथितम्। तस्मिंश्च शारीरकमीमांसाया आदितोऽधिकरणपञ्चकमानन्दतीर्थीयं खण्डितमस्ति। तेनैवाग्रिमाधिकरणानां सर्वेषामेवासारत्वं प्रदर्शितमित्येतद् दीक्षितवर्यमाहात्म्यं केन वा निर्वक्तुं पार्येत ऋते जगदीशम्।

तदेतद्ग्रन्थरत्नं मध्वानुयायिना केनचन विजयीन्द्राभिधानेन यतिना "मध्वाध्वकण्टकोद्धारः" इति नामकग्रन्थेन मलिनितम्। तस्मिंश्च ग्रन्थे दीक्षितेन्द्राणां ग्रन्थसरणिं पङ्क्तिशोऽनूद्य तन्न, तत्तुच्छं, तन्निरस्तं, तद्धेयं, इत्यादिवाक्यैः केवलैर्दूषितमित्येतत्तद्द्रष्टॄणां स्वत एव ज्ञायत इति नास्माभिर्वक्तव्यम्। तदेवं खण्डनाभासेन मलिनीकृतं ग्रन्थरत्नं प्रक्षालयितुकामैः श्रीमदप्पय्यदीक्षिगुरुपरम्पराप्रविष्टैः श्रीमन्नाल्वाडिकृष्णराजास्थानाविद्वत्पदमलंकुर्वद्भिर्महीशूरसंस्कृतमहापाठशालायामद्वैतवेदान्तप्रधानाध्यापकैरस्मद्गुरुवर्यैः श्री० पा. नारायणशास्त्रिपादैः "मखिवर्यभूषण" नाम्नी काचन टिप्पणी कृता। तस्यां दीक्षितेन्द्राणामाशयः सम्यगाविष्कृतः। दीक्षितैः सूचितोऽर्थो विशेषतो विवृतः। मध्वाध्वकण्टकोद्धारकृदारोपिता दोषा निर्युक्तिकताप्रदर्शनेन प्रत्यस्तां इति प्राज्ञानां पुरतो वक्तुमुत्सहते मे चेतः।

अथ विचारयामः क्व कदा कियन्तं वा समयमध्यासतैते दीक्षितवर्या इति। एते हि तुण्डीरमण्डलान्तर्वर्तिन्यखिलभुवनतललामायमानकाञ्चीपुरपरिसरपरिव-

तीति अडयप्पलनाम्यग्रहारे समुदभवन्निति सार्वजनीनम् । यदद्यापि तत्प्रा-न्तवासिनः कतिचन तद्वंश्या इति संकीर्त्यन्ते । एषां हि पितामहः **आचार्य-दीक्षितनामा** समभवदिति समवगम्यते । तद्यथा तैरेव न्यायरक्षामणौ—"आसे-तुबन्धतटमा च तुषारशैलादाचार्यदीक्षित इति प्रथिताभिधानं...अस्मत्पि-तामहमशेषगुरुं प्रपद्ये "इति प्रतिपादितम् । तेन छन्दोगकुलतिलकेन भरद्वाजकु-लजलधिकौस्तुभमणिनाऽयाजिषताष्टौ क्रतवः, अभोजिषताष्टौ ग्रामाः, अखा-निषताष्टौ तडागाः, अजनिषताष्टौ तनयाः, अबन्धिषताष्टौ शिवालयाः, अदी-पिषताष्टौ दिशश्चेति सर्वमिदं तदन्वयजनिमता नीलकण्ठदीक्षितेन स्वकृतनल-चरित्रनाटकप्रस्तावनायां प्रपञ्चितम् । तस्य चाऽऽचार्यदीक्षितस्य द्वे जाये ययोः प्रथमा सजातीया । द्वितीया च विजातीयवैष्णवकुलतिलकश्रीवैकुण्ठाचार्यवं-श्यश्रीरङ्गराजाचार्यदुहिता "**तोतारम्बी नाम्नी** । तस्यामुदभवंश्चत्वारस्तनयाः । तेषु ज्यायान् मातामहप्रार्थनाप्रसन्नपितृदत्तरङ्गराजनामधेयः " **रङ्गराजाध्व-री**"इति सुप्रसिद्धः । स च सर्वविद्याविशारदोऽद्वैतविद्यामुकुरविवरणदर्पणा-द्यनेकप्रबन्धकृत् । तद्यथा तत्रैव नलचरिते—" तस्य पञ्चमः सूनुरद्वैतविद्यामुकु-रविवरणदर्पणाद्यनेकप्रबन्धनिर्माता शीलित एव रङ्गराजाध्वरीति " तस्यैव सुतयोर्द्वयोरयमाद्यः, यो हि अस्मत्कथानायको दीक्षितेन्द्रः। द्वितीयोऽच्चान्दी-क्षित इति । तेषां दीक्षितेन्द्राणां तातादेव सकलविद्यावाप्तिश्चेति स्पष्टमधिग-म्यते । तद्यथा तैरेवोक्तं—" विद्वद्गुरोर्विहितविश्वजिदध्वरस्य श्रीसर्वतो मुख-महाव्रतयाजिसूनोः । श्रीरङ्गराजमखिनः श्रितचन्द्रमौलिरस्त्यप्पदीक्षित इति प्रथितस्तनूजः " इति । तथा—परिमलेऽपि प्रथमाध्यायाद्यतृतीयचरणयोः समा-प्तौ च दृश्यते । न्यायरक्षामणौ च—यं ब्रह्मनिश्चितधियः...श्रीरङ्गराजमखिनं गुरुमानतोऽस्मि " । इति । एवं शिवतत्त्वविवेकसिद्धान्तलेशसंग्रहाद्यनेक-प्रबन्धवचनैः सर्वजिद्यजनादिमहामहिमभूषितस्य सकलतन्त्रपारदृश्वनः श्रीसर्व-तोमुखमहाव्रतयाजिश्रीमदाचार्यदीक्षितपौत्रस्य श्रीरङ्गराजाध्वरितनयश्रीमद-प्पय्यदीक्षितस्य तातादेव समुपात्तसकलकलाकलापविस्तरस्य श्रीमतः अप्पदी-क्षित इत्येव नाम । परन्तु कर्नाटान्ध्रदेशादिव्यवहारसङ्गतं—अप्प, अय्य—इति पदद्वयमादाय अप्पय्यदीक्षित इत्येव भूयान् व्यवहारः ।

इमे च श्रीविजयनगराधीश्वरस्य श्रीकृष्णराजसूनोः **चिन्नबोम्ममहीपतेः** तदग्रजस्य च **नरसिंहदेवापरपर्यायस्य श्रीनरसभूपालदेवस्य** तत्सूनोः

**वेङ्कटपतिरायस्य** च समकालिका इति सुविशदमवगम्यते । तथा हि——समरपुङ्गवदीक्षितैर्यात्राप्रबन्धे——"हेमाभिषेकसमये परितो निषण्ण-सौवर्णसंहतिमिषा चिनबोम्मभूपः । अप्पय्यदीक्षितमणेरनवद्यवि-द्याकल्पद्रुमस्य कुरुते कनकालवालम्" । इति वर्णितम् । तथाऽन्यै-रपि——"कर्णश्रीचिन्नबोम्मक्षितिपतिरभितो लम्भयञ्शातकुम्भस्तोमं हेमा-भिषेकप्रणयनसमये यस्य मूर्तिं प्रशस्याम् । रेजे श्रीरङ्गराजाध्वरिवरकलशा-म्भोधिलब्धप्रसूतेर्विद्याकल्पद्रुमस्य स्वयमिव कलयञ्जातरूपालवालम् ।" इति । एवमादिभिस्तेषां चिन्नबोम्मभूपतेः समकालिकतोक्ता भवति । नरसदेवसमकालि-कत्वं च तैरेव चित्रमीमांसायां परिणामोत्प्रेक्षाप्रकरणयोः "द्विर्भावः—पुष्पकेतोः, नरसिंह धरानाथ के वयं तव वर्णने...नरसिंहमहीपाल विदुस्त्वां मकरध्वजम् । इत्यादिश्लोकैः प्रतिपादितम् । वेङ्कटपतिसमकालिकत्वं च विधिरसायनस्थे "अव्याप्तिः पौर्णमास्याम्" इतिश्लोकव्याख्याने स्पष्टमधिगम्यते । इमे च कृष्णराजनरसभूपचिन्नबोम्मवेङ्कटक्षोणिपाला आङ्गलेतिहासरीत्या तदीय-षोडशशतकपरार्धादारभ्य सप्तदशशतकपरार्धं यावदासन्नित्यध्यवसीयते । एषां दीक्षितेन्द्राणामायुर्द्वासप्ततिः समाः । तथाहि——तदनुजपौत्रेण **नीलकण्ठदीक्षितेन** निरूपितं शिवलीलार्णवे——"कालेन शंभुः किल तावताऽपि कलाश्चतुःषष्टिमिताः प्रणिन्ये । द्वासप्ततिं प्राप्य समाः प्रब-न्धाञ्शतं व्यधादप्पयदीक्षितेन्द्रः । इति । किंच तैरेव स्वनिर्णयावसरे चिदम्बरे "चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं सुताश्च विनियोज्ज्वलाः सुकृतयश्च काश्चित्कृताः । वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा न किञ्चिदहमर्थये शि-वपदं दिदृक्षे परम् ।" "आभाति हाटकसभानटपादपद्मज्योतिर्मयो मनसि मे तरुणारुणोऽयम् ।" इत्यभिधायार्धोक्त एव विरते "नूनं जरामरणघोरपिशाचकी-र्णा संसारमोहरजनी विरतिं प्रयाता" इति तदुत्तरार्धमापूरयांचक्रुस्तत्तनया इति चाद्यापि श्रूयते—

इदमत्रानुसंधेयम्—यत्किल कदाचिदेते स्वाभिमानिनं विजयनगराधीश्वरं श्रीकृष्णराजापराभिधं वेङ्कटक्षितिपतिमुपनिषेव्य विश्वजिद्यागविधित्सां च वि-शदय्य विजयनगराद्वाराणसीमनुप्राप्य तत्रैव पञ्चक्रोशयात्राविश्वेश्वरार्चनजाह्न-वीनिषेवणादिनिरताः कमपि कालमूषुः । तदानीमेव तेषां मीमांसकेन पण्डित-राजमीमांसागुरुणा **खण्डदेवेन** सह संगतिः, तस्मै च विधिरसायनार्पणमित्या-

दि समजनि। तदानीमेव भट्टश्रीशेषवीरेश्वरसब्रह्मचारिणा श्रीशेषकृष्णदीक्षितान्तेवासिना सिद्धान्तकौमुदीमनोरमाशब्दकौस्तुभतत्त्वकौस्तुभादिप्रणेत्रा भट्टोजीदीक्षितेन सह समागम इत्यौत्तराः। सेतुयात्रायै दक्षिणां दिशं प्रस्थितेन तेन स्वस्थान एवैषां समागम इति दाक्षिणात्याः। तत्र निर्णेतुमन्यतरद्यद्यपि नोपायस्तथाऽपि अप्पय्यदीक्षितानां भट्टोजिना सहाऽऽसिका वाराणस्यामभवदिति स्पष्टं सप्रमाणं ब्रूमः। अस्मिन्नेव समये स्थाविरमापन्नस्त्रैलिङ्गवेङ्गिनाडुकुलावतंसः पेरुभट्टात्मजः शेषकृष्णदीक्षितसुतश्रीशेषवीरेश्वरदीक्षितशिष्यः "जगन्नाथपण्डितः" स्वगुरुजनकविरचितप्रक्रियाप्रकाशाख्यप्रक्रियाकौमुदीव्याख्यानखण्डनच्छायापन्नां भट्टोजीनिर्मितां प्रौढमनोरमामवलोक्य गुरुद्रुगयमित्यसूयन्नस्मै समास्त वाराणस्यां शान्तसकलविषयोपभोगेच्छ इति तच्चरित्रावलोकिनां स्फुटमिति नेह प्रतन्यते।

श्रीमदप्पय्यदीक्षितेन्द्राणां जगन्नाथेन समागमः स्वकीयद्वासप्ततितमाब्दपूर्वार्धे। स च जगन्नाथ औरङ्गजेबेन शहाजहांप्रभौ कारागारं प्रवेशिते तदसहमानेन वाराणसीं प्रविश्य तत्रत्यैरनाचार इत्यनादृते प्राणान् विमुमुक्षुः भागीरथीं प्राप। तत्रैव तयोः समागमः। ततश्चायं समय आङ्ग्लाब्दरीत्या १६५८ भवति। स चेद्दीक्षितानां द्वासप्ततितमः। ते १५८६ वत्सरे संजाताः १६५९ वत्सरे प्रापुरैश्वरं पदमिति निर्विवादम्।

एतत्प्रणीताः प्रबन्धाश्च परःशतं वर्तन्त इति "चतुरधिकशतप्रबन्धनिर्माणालंकर्मीण" इत्यादि तदीयविरुदावलीभिर्विशदी भवति। परंतु पञ्चाशतः प्रबन्धानामभिधानाविषयाद्युपलभ्यते। अन्येषां तु नामापि न श्रूयते—

तत्र च दृष्टश्रुतानां प्रबन्धानामियमियं

**पट्टिका—**

+अलंकारशास्त्रे+

१ कुवलयानन्दः
२ चित्रमीमांसा
३ वृत्तिवार्तिकम्
४ नामसंग्रहमाला
५ तद्व्याख्या
उभे ह्येते नाममात्रविश्रुते।

+व्याकरणशास्त्रे+

६ नक्षत्रवादावली
७ प्राकृतचन्द्रिका

+पूर्वमीमांसायाम्+

८ चित्रपुटः
अयमपि नाम्नैव श्रुतः।
९ विधिरसायनम्

१० सुखोपयोजनी
११ उपक्रमपराक्रमः
+पूर्वोत्तरमीमांसयोः+
१२ नक्षत्रवादावली
+वेदान्ते+
१३ परिमलः
१४ न्यायरक्षामणिः
१५ सिद्धान्तलेशसंग्रहः
१६ मतसारार्थसंग्रहः
+शंकरमते+
१७ नयमञ्जरी
+मध्वमते+
१८ न्यायमुक्तावलिः
१९ तद्व्याख्या
+रामानुजमते+
२० नयमयूखमालिका
+श्रीकण्ठमते+
२१ शिवार्कमणिदीपिका
२२ मणिमालिका
+इतरत्र+
२३ रत्नत्रयपरीक्षा
२४ शिखरिणीमाला
२५ शिवतत्त्वविवेकः
२६ ब्रह्मतर्कस्तवः
२७ शिवकर्णामृतम्
२८ रामायणतात्पर्यसंग्रहः
२९ भारततात्पर्यसंग्रहः
३० शिवाद्वैतनिर्णयः
३१ शिवार्चनाचन्द्रिका
३२ बालचन्द्रिका
३३ शिवध्यानपद्धतिः
३४ तद्व्याख्या
३५ आदित्यस्तवरत्नम्
३६ तद्विवरणम्
३७ मध्वतन्त्रमुखमर्दनम्
३८ मध्वमतविध्वंसनम्
३९ पञ्चरत्नस्तवः(सविवृतिः)
४० शिवानन्दलहरी
४१ दुर्गाचन्द्रकलास्तुतिः (सव्याख्या)
४२ कृष्णध्यानपद्धतिः(सव्याख्या)
४३ वरदराजस्तवः(सव्याख्यः)
४४ यादवाभ्युदयः(सव्याख्यः)
४५ आत्मार्पणस्तुतिः

—इति—

सत्यप्येषां सकलतन्त्रनैपुणे विशेषतो वैदुषी पूर्वोत्तरमीमांसयोरित्यतोऽप्यर्वाचीनानां पण्डितशिरोमणीनां सर्वज्ञकल्पानां मधुसूदनसरस्वत्यादीनां वचसैव ज्ञायते । किंचैतानुदाहरन्ति भगवतो भवानीपतेरंशावतीर्णान् शांभवगणपारिषद्भूतान्—तद्यथा शिवरहस्ये नवमांशे " दीक्षितोऽपि भवेत्कश्चिच्छैवश्छन्दोगवंशजः " । "भासुराचारनिरतः शिवभक्ताग्रणीः सुधीः ।

शैवशास्त्रं तदा भूमौ लुप्तं विस्तारयिष्यति ॥"

तथाऽन्यत्रापि—

" कलौ छन्दोगोऽपि श्रुतिशिखरतात्पर्यवचनैर्मम ग्रन्थोद्धद्भैः जयति मद्वादिद्विपहरिः । भिनत्त्येवं दीक्षाक्षपितसुखवृत्तिःशिवपदे शिवे दभ्रस्थाने भवति च ततोऽन्ते मम गणः" इति च प्रतिपादितम् । एवं मया यथामति दीक्षितेन्द्रचरितं यथोपलब्धि च तत्कालादिकं च निरूपितमपि निरसूयैरितोऽप्यतिशयितप्रमाणपुरःसरं निरूप्यतामिति प्रार्थ्य विरमामि ।

मया प्रथमतः " मध्वमतविध्वंसननामकं " ग्रन्थरत्नममूल्यमस्तीति केवलं नाम्नैवावगतं कस्यचिन्महाशयस्य मुखात् । ततः तन्मृगयता श्रीमतां श्रीमन्नाल्वडिक्कृष्णराजास्थानविदुषां महीशूरस्थपाठशालायां धर्मशास्त्रप्रधानाध्यापकानां पि. आर. शिवसुब्रह्मण्यशास्त्रिणां निकटे ग्रन्थलिप्या चोळदेशे मुद्रितमतिप्राचीनमुपलब्धम् । तत्र स्वव्याख्ययोपेतं मध्वतन्त्रमुखमर्दनमासीत् । मया तु ग्रन्थलिपिरनभ्यस्ताऽपि तदवलोकनकुतूहलेन यत्नतोऽधीता । ततस्तदवलोकनेन मन्मनसि "सर्वजनदुर्लभमिदं ग्रन्थरत्नं देवनागरलिप्या मुद्रयित्वा प्रकाशयेयम्" इति मतिः समुदजृम्भत । एवमालोचयतो मम वत्सरत्रयमतीतम् । कदाचिदीश्वरप्रेरितेन श्रीविद्वन्मणिविद्यालंकारादिपदविराजितानामुप्पिनबेटगेर्यभिजनानां धारानगरे श्रीशंकराचार्यसंस्कृतपाठशालायां मुख्याध्यापकानां श्रीनागेशशास्त्रिवर्याणां संनिधौ सर्वोऽपि मम निष्कराहितस्य मनोभावः प्रकटीकृतः । तैरेवं प्रत्युत्तरितं—एतन्मुद्रणाय पुण्यपत्तनस्थानन्दाश्रमाधिपतिं प्रार्थय, तत्र साहाय्यं कुर्मो वयमिति ।

तथैवानुष्ठिते मयि श्रीमद्भिरानन्दाश्रमाधिपैरेतन्मुद्रणायावकाशो दत्त एव । तदाऽहं प्रमोदसंदोहतुन्दिलमनाः कृतसफलप्रयत्नः अस्मद्गुरुवर्यनिकटे सर्वमिदं विज्ञापितवान् । तैः कृपया स्वकृता " मखिवर्यभूषण " नाम्नी टिप्पन्यपि मह्यमनुगृहीता । तेनाहं द्विगुणितानन्दः तल्लेखनशोधनादिकार्येषु व्यापृतः । समाप्तश्चाद्यैव मदीयः कार्यभरः परेशकृपया निरन्तरायम् ।

प्रस्तावनालेखनसरणिप्रदर्शनेन टिप्पणीदानेन चानुग्रहीतॄणामस्मद्गुरुवर्याणां पादाम्बुजे प्रणतिकुसुमाञ्जलीन् समर्पयामि ।

सव्याख्यमूलपुस्तकदानेनोपकर्तॄणां पि. आर. शिवसुब्रह्मण्यशास्त्रिणां नतिपरम्पराः निवेदयामि ।

सर्वस्यास्य मूलकारणानां विद्वन्मणिश्रीनागेशशास्त्रिणां प्रणामसंततीरुपहारी करोमि।

लेखनादिषूपकृतवतां मन्मित्रवर्याणां, हिरेमङ्गळूराभिजन ब्र०श्री० सीतारामभट्टानां कर्क्यभिजन ब्र० श्री० वेङ्कटरमणशास्त्रिणां चोपकारभारं बिभर्मि।

मुद्रणशोधनादिकार्येषु विशेषतोपकर्तॄणमानन्दाश्रमाधिपानां तत्रत्यविदुषां च सहस्रशो धन्यवादान् समर्पयामि।

एवममूल्यस्यानतिसुलभस्य ग्रन्थजातस्य प्रकाशकानामद्वैततत्त्वश्रद्धालूनामानन्दाश्रमाधिकारिणां भूयोऽप्येवं मतिर्दीर्घायुरारोग्यं च प्रवर्धतामिति उमारमणं भगवन्तमनवरतं प्रार्थयामः।

एवं शोधितेऽप्यस्मिन्मानवमात्रसंभाव्यमानप्रमादाद्वा सीसकाक्षरदोषाद्वा पतितान् दोषान् क्षन्तुमर्हन्ति सन्तो विपश्चित इति भूयो भूयः प्रणम्य विरमामः।

शके १८६१ प्रमाथि—संवत्<br>आश्विनकृष्णचतुर्थी<br>सौम्यवासरः।

महाजनविधेयः कर्क्यभिजनः<br>**सूर्युपाह्वरामचन्द्रशास्त्री**<br>वेदान्तविद्वान् ( महीशूर )



ॐ तत्सद्ब्रह्मणे नमः ।

मखिवर्यभूषणाख्यटिप्पणीपरिकर्मितमध्वमतविध्वंसनाख्यया
व्याख्यया सनाथीकृतं
श्रीमदप्पय्यदीक्षितेन्द्रविरचितं

# मध्वतन्त्रमुखमर्दनम् ।

## अथोपोद्घातप्रकरणम् ।

व्या०—उद्घाटय योगकलया हृदयाब्जकोशं धन्यैश्चिरादपि यथारुचि गृह्यमाणः ।
यः प्रस्फुरत्यविरतं परिपूर्णरूपः श्रेयः स मे दिशतु शाश्वतिकं मुकुन्दः ॥१॥
मध्वतन्त्रमुखमर्दनं मया यत्कृतं प्रकरणं मिताक्षरम् ।
पद्यरूपमनतिस्फुटाशयं तत्सुखावगतये विविच्यते ॥ २ ॥

आनन्दतीर्थप्रवर्तितशारीरकशास्त्रप्राथमिकपञ्चाधिकरणप्रक्रियां प्रायस्तन्मतमर्यादयैव दूषयितुं प्रकरणमारभमाणः प्रारिप्सितप्रकरणनिर्विघ्नपरिसमाप्त्यादिप्रयोजनायाऽऽदौ विशिष्टेष्टदेवतानुसंधानसंकीर्तनरूपं मङ्गलमाचरन्नेव

---

टि०— (१) नमो हरिहराभिन्नगुरुपादाम्बुजन्मने ।
नमज्जनतमोभित्तिचुञ्चुतिग्ममरीचये ॥ १ ॥

इह खलु तत्रभवद्भिरप्पय्यदीक्षितेन्द्रचरणैः प्रारिप्सितस्य ग्रन्थवरस्य निर्विघ्नपरिसमाप्त्यर्थं कृतेष्टदेवताशीरूपमङ्गलं शिष्यशिक्षायै निबध्यते टीकायाम्—उद्घाटयेति । योगकलया—अनवरताभ्यस्तयोगसाधनेन हृदयाब्जकोशं पङ्कजमुकुलसदृशं मन उद्घाटय स्फुटीकृत्य बाह्येन्द्रियनिग्रहपूर्वकमन्तरिन्द्रियं सविकल्पकसमाधिना वशीकृत्येति यावत् । धन्यैः—सुकृतिभिः सनकादियोगिवर्यैः, यथारुचि—रामकृष्णनटराजादिरूपेण, गृह्यमाणोऽपि—चिन्त्यमानोऽपि यो मुकुन्दः—शुद्धसत्त्वप्रधानमायोपाधिकः परमेश्वरः, परिपूर्णरूपः-सर्वकल्पनाधिष्ठानरूपः सच्चिदानन्दब्रह्मस्वरूपः, अविरतं—त्रिकालाबाध्यतया, प्रस्फुरति-सत्तास्फूर्तिप्रदानेन सर्वप्रत्यग्रूपतया भाति, सः—पूर्वोक्तः, तत्त्वमस्यादिमहावाक्यजन्याखण्डवृत्त्याभिव्यङ्ग्यः सन्, शाश्वतिकं श्रेयः—नित्यं मोक्षसुखं दिशतु—प्रयच्छतु । अविद्यानिवर्तनपुरःसरमस्मत्प्रत्यगात्मरूपो भवत्विति यावत् ॥ १ ॥

(२) यदर्थं मङ्गलमाचरितं तत्प्रतिजानीते—मध्वतन्त्रेति । मध्वतन्त्रस्य—सटीकस्याणुभाष्यस्य मुखं—आद्यमधिकरणपञ्चकं तस्य मर्दनं—तद्ग्रन्थस्थभूयःप्रामाणिकमर्यादालङ्घनस्य तन्मतमर्यादयैव प्रदर्शनेन खण्डनं मिताक्षरं—अर्थभूयिष्ठमल्पाक्षरं अनतिस्फुटाशयं—अल्पज्ञदुर्विज्ञेयाभिप्रायं सुखावगतये—मध्वमतखण्डनेच्छूनामनायासप्रतिपत्तये, अत एव वक्ष्यति "तन्मतखण्डनकौतुकिनां विदुषां मुदे" इति । विविच्यते—सरलया वाण्या व्याख्यायते ॥ २ ॥

शिवं विष्णुं वा यद्यभिदधति शास्त्रस्य विषयं
तदिष्टं ग्राह्यं नः सगुणमपि तद्ब्रह्म भजताम् ।
विरोधो नातीव स्फुरति नहि निन्दा नयविदां
न सूत्राणामर्थान्तरमपि भवद्वार्यमुचितम् ॥ १ ॥

---

व्या०— प्रकरणारम्भं तावदाक्षिपति—शिवमिति । वस्तुतो निर्विशेषब्रह्मणि प्रतिष्ठितस्यापि शारीरकमीमांसाशास्त्रस्य केचन शिवं विष्णुं वा

---

टि०— १ आक्षिपतीति—निर्विशेषपरेऽस्मिन्ब्रह्ममीमांसाशास्त्रे तत्र तत्र निरूपितस्य सगुणस्वरूपस्यापि स्वाभिप्रेतत्वेन विष्णुपरतया प्रवृत्तस्य मध्वतन्त्रस्य खण्डने प्रवृत्तिर्नोचितेति भावः । एतदेव प्रथमश्लोकान्ते वक्ष्यति " आनन्दतीर्थीयं मतं कुतो न ग्राह्यं येन तद्दूषणे प्रवृत्तिरित्याक्षेपाभिप्राय इति ।

शिवं विष्णुं वेति—अत्र वाशब्दोऽनास्थायां बोध्यः । अनेन " ब्रह्ममीमांसाशास्त्रस्य निर्विशेषब्रह्मपरत्वेऽपि सगुणब्रह्मणो तात्पर्यनिर्णयार्थं तत्र तत्र सगुणं ब्रह्मापि विचारितं; तच्च शिवरूपं विष्णुरूपं वा भवतु न नोऽत्राऽऽग्रहः; तयोर्भेदस्योत्कर्षापकर्षयोश्चाभावात्, भेददर्शिनो महतः प्रत्यवायस्य प्राप्तेश्चेति सूचितम् । तदुक्तम्—सौरपुराणे—२४ तमेऽध्याये शिवेन विष्णुं प्रति—" नाऽऽवाभ्यां विद्यते भेदो मच्छक्तिस्त्वं न संशयः । त्वन्मयं मन्मयं सर्वमव्यक्तं पुरुषात्मकम् ॥ इति । कौर्मेऽपि " न मे नारायणाद्भेदो विद्यते हि विचारतः । तन्मयोऽहं परं ब्रह्म स विष्णुः परमेश्वरः ॥ इति । हरिवंशेऽपि—" यो विष्णुः स तु वै रुद्रो यो रुद्रः स पितामहः । एकमूर्तिस्त्रयो देवा रुद्रविष्णुपितामहाः ॥ इति । भारतेऽपि— " रुद्रो नारायणश्चैवेत्येकं सत्त्वं द्विधाकृतम् ॥ इति । तयोरुत्कर्षापकर्षाभावोऽपि कौर्मे पठितः—क्वचिद्रुद्रः क्वचिद्विष्णुः क्वचिद्ब्रह्मा प्रशस्यते । नानेन तेषामाधिक्यं न्यूनत्वं वा कथंचन ॥ इति । भेददर्शिनो निन्दा च स्मर्यते नारदीये—" हरिरूपी महादेवो हररूपी जनार्दनः । ईषदप्यन्तरं नास्ति भेदकृन्नरकं व्रजेत् ॥ इति । कौर्मेऽपि—ये त्विमं विष्णुमव्यक्तं मां च देवं महेश्वरम् । एकीभावेन पश्यन्ति न तेषां पुनरुद्भवः ॥ येऽन्यथा संप्रपश्यन्ति मत्वेमं देवतान्तरम् । ते यान्ति नरकान्घोरान्हतेषु च व्यवस्थितिम् । कर्मविपाकेऽपि—यो ब्रह्मविष्णुरुद्राणां भेदमुत्तमभावतः । साधयेदुदरव्याधियुक्तो भवति मानवः ॥ इति । वायुपुराणेऽपि—" अयं परस्त्वयं नेति संरम्भाभिनिवेशिनः । यातुधाना भवन्त्येव पिशाचाश्च न संशयः ॥ इति । महाभारतेऽपि—" शिवं प्रति विष्णुवचनम्—" यस्त्वां द्वेष्टि स मां द्वेष्टि यस्त्वामनु स मामनु ॥ इति । भविष्योत्तरे च युधिष्ठिरं प्रति भगवद्वचनं—" मम भक्तः शिवद्वेषी मद्द्वेष्टा च शिवप्रियः । तावुभौ नरकं यातो यावच्चन्द्रदिवाकरौ ॥ इति ।

२ वस्तुतो निर्विशेषेति—अयं भावः—" अथातो ब्रह्मजिज्ञासा ( ब्र० अ० १

व्या०—विषयं वदन्ति चेत्तदिष्टमेव । यतस्ताच्छिवरूपं विष्णुरूपं वा सगुणं ब्रह्मोपासीनानामस्माकमद्वैतवादिनामुपास्यस्वरूपगुणमहिमावधारणाय तत्प्रतिपादनप्रवृत्तं तदीयं शास्त्रस्य योजनं ग्राह्यम् । अपेक्षितं खल्वस्माकमपि निदिध्यासनोपयोगि चित्तवशीकरणकैलासवैकुण्ठादिस्थानगतदिव्यभोगानुभवक्रममुक्तिस्वरूपफलापेक्षिणां तयोरुपासनम्। अथापि स्यात्क्वचित्क्वचिद्विरुद्धत्वात्तद्योजनमग्राह्यमिति, नैतदेवमुपेक्षणीयताहेतुः। विरोधाभावात् । तथा हि—निर्गुणवाक्यानां सगुणे ब्रह्मणि सगुणान्तरपरवाक्यानां स्वाभिमतसगुणब्र-

टि०— पा० १ अ० १ सू० १) इति सूत्रे ब्रह्मज्ञानस्येष्टत्वप्रतिपादनेन फलत्वमुपक्षिप्तम् । द्वित्रिक्षणावस्थायिनस्तस्य नित्यपुरुषार्थत्वासंभवाद्ब्रह्माज्ञानादिबन्धनिवर्तकत्वेनैव तद्वक्तव्यम् । नतु ब्रह्मप्रसादहेतुत्वेन । समानविषयकज्ञानाज्ञानयोर्निवर्त्यनिवर्तकभावस्य लोके दृष्टत्वात् । अदृष्टत्वाच्च तद्विषयकज्ञानस्य तत्प्रसादहेतुत्वस्य । तदज्ञानादीनां च सत्यत्वे ज्ञानान्निवृत्त्ययोगान्मिथ्यात्वं सूचितम् । ततश्च मिथ्योपाध्योर्जीवेश्वरयोरभेदरूपं प्रत्यगभिन्नं ब्रह्म विषयः संसूचितः । तदेव निर्विशेषं ब्रह्म सूत्रस्थब्रह्मपदेन प्रतिपाद्यते, न तु शिवो विष्णुर्वा, सामान्यवाचकपदस्य प्रकरणपदान्तरसमभिव्याहारादिप्रबलतरप्रमाणाभावे विशेषपरत्वकल्पनस्याप्रामाणिकत्वात् । जगज्जन्मादिकारणत्वादयोऽपि ब्रह्मणि समर्थितत्वात् । किंच स्वायत्ते शब्दप्रयोगे “शिवजिज्ञासा” विष्णुजिज्ञासा” वेत्यनुक्त्वा “ब्रह्मजिज्ञासा” इति वदतः सूत्रकृतो निर्विशेषं ब्रह्मैव स्वशास्त्रे विषयत्वेन विवक्षितम्, इत्याशयः प्रामाणिणिकाभिप्रेत इति । एनेन—“समस्तचेतनाचेतनविलक्षणे सत्याखिलविश्वोत्पत्त्यादिकारणेऽनन्तकल्याणगुणशालिनि विष्णुरूपे परे ब्रह्मणि यद्ब्रह्मसूत्रयोजनं तदेव प्रामाणिकैरङ्गीकार्यं, न तु प्रत्यगभिन्ननिर्विशेषब्रह्मादिविषयतया शंकरादिकृतं ब्रह्मसूत्रयोजनम् । तथाभूते ब्रह्मणि मानाभावात् । वेदान्तानामुपक्रमादिना सगुणब्रह्मपरत्वावसायात् । प्रमाणमात्रस्य विशिष्टार्थप्रत्यायकत्वस्वाभाव्यात् । न च लक्षणया वेदान्तानां चिन्मात्रे तात्पर्यम् । तेषां मुख्यार्थत्वे बाधकाभावात् । न च तात्पर्यानुपपत्त्या लक्षणाकल्पना, चिन्मात्रे तात्पर्यमित्यस्यैवासिद्धेः । वेदान्तप्रवृत्तेः पूर्वं चिन्मात्रस्यानुपस्थितत्वात् । वेदान्तैरेव तदुपस्थितावात्माश्रयादिदोषप्रसङ्गात् । चिन्मात्रस्य मानान्तरागोचरत्वात् । न च योगप्रभावेण चिन्मात्रोपस्थितौ तत्र वेदान्तानां तात्पर्यकल्पनम्, व्यधिकरणत्वाच्छब्दस्य परार्थत्वात । किंच परमते निर्विशेषविषयाणामेव श्रुतिसूत्राणां सगुणविषयतया योजनमप्यङ्गीकृतम् । निर्विशेषविषयतया पराभिमतं योजनं तु नास्माभिरङ्गीकृतम्। प्रत्यक्षादिविरोधात् । तथा च श्रुतिसूत्राभ्यां सगुणविषयतया सगुणयोजनमेव सर्वोपादेयं स्यान्न तु पराभिमतं योजनम्, असंप्रतिपत्तेरिति वदन्तः परास्ताः।

व्या०—सूत्राणि च योजनं, ब्रह्मणः सगुणत्वसमपञ्चत्वादिसाधनं, स्वस्वाभिमतसगुणब्रह्मणः सगुणान्तरादधिकत्वसाधनं, सगुणान्तरस्य परब्रह्मत्वाभावसाधनं, तत्र सर्वत्रापि युक्त्युपन्यसनं, तद्विरोधियुक्तिनिराकरणं, इत्यादिकं हि विरुद्धमवभासते। तत्सर्वं "नहि निन्दान्यायेनाविरुद्धम्। नहि निन्दान्यायश्च "स्फारात्तत्तत्पुराणागमः" इति (श्लो० ५४) श्लोकव्याख्यानावसरे स्फुटी करिष्यते। अपि चास्मदीयपूर्वाचार्यग्रन्थेष्वपि महता यत्नेन परस्परपक्षप्रतिक्षेपपूर्वकमेकजीववादानेकजीववादादिव्यवस्थापनं दृश्यते। न च तत्सर्वं तर्कादिग्रन्थेषु परस्परपक्षप्रतिक्षेपादिवद्विरुद्धमेव। किंत्वद्वितीयब्रह्मप्रतिपत्त्युपायेषु नानाविधेषु संभवत्सु विनेयबुद्धिप्रावण्यानुरोधेनोपदिदिक्षितोपायविशेषाणां तत्तद्विनेयबुद्धिस्थिरीकरणार्थत्वात्। सूक्ष्मारुन्धतीप्रतिपत्त्युपायतत्तदुपदेश्यपुरुषचक्षुर्विक्षेपाभिमुखतारकाविषयनानाविधस्थूलारुन्धतीप्रदर्शकवाक्यवत्, सिद्धशब्दप्रतिपत्त्युपायकृत्रिमशब्दगतविविधप्रकृतिप्रत्ययादिविभागप्रदर्शकानेकव्याकरणवच्चाविरुद्धम्। किंबहुना—श्रुतिष्वपि क्वचिदाकाशादिसृष्टिप्रतिपादनं क्वचित्तेजःप्रभृतिसृष्टिप्रतिपादनमित्याद्यध्यारोपापवादाभ्यामद्वितीयब्रह्मप्रतिपत्त्युपायभेदत्वादाविरुद्धम्। "कारणत्वेन चाऽऽकाशादिषु यथाव्यपदिष्टोक्तेः" (ब्र० १।४।४।१४) इत्यधिकरणे तथा निरूपितत्वात्। तथा शारीरकसूत्राणां तत्र तत्र सगुणयोजनान्तरमपि तत्तत्सगुणोपासनाभिमुखानां तत्र तत्र बुद्धिस्थिरीकरणार्थमित्यविरोधनयने काऽनुपपत्तिः। यत्त्वस्मदनभिमतोपासनाप्रकारकथनादि, तावन्मात्रमनुपादेयमस्तु। न तावता सगुणपरत्वेन सूत्रयोजनानां सर्वथैवोपेक्षणीयता। अथोच्येत- निर्गुणपरः सूत्रसंदर्भः कथं सगुणपरोऽपि स्यादिति? स्यादेव, सूत्राणां विश्वतोमुखत्वादिति ब्रूमः। न ह्यस्मदीयैरपि निर्गुणपराणामेव सूत्राणां सगुणेऽपि संभवदपेक्षितं

टि०— लोके चेतनस्याचेतनस्य वा पदार्थस्य प्रमितत्वेन चेतनाचेतनात्मकस्य तद्विलक्षणस्य वा तस्य शशशृङ्गायमाणत्वात्। तादृशे विष्णुरूपे ब्रह्मण्यनन्तकल्याणगुणपूर्तेर्ब्रह्मसूत्रयोजनस्य च गगनकमलिनीकल्पत्वेन तस्य प्रामाणिकाङ्क्षीकार्यत्वे तेषामतिगर्ह्यत्वापातात्। निर्विशेषे च सूत्रयोजनस्य वेदान्तानां तात्पर्यस्य चाभियुक्तकृतस्य जागरूकत्वेन तदपरिशीलनस्य तददोषत्वात्। तात्पर्यानुसारिशक्तिलक्षणान्यतरकल्पनस्य त्वयाऽप्यभ्युपगन्तव्यत्वात्। चिन्मात्रस्य योगप्रभावेण लक्षणया वोपस्थितिरित्युक्तेरनुक्तोपालम्भमात्रत्वात्। सगुणब्रह्मणोऽप्रत्यक्षत्वेन तत्समन्वयस्य प्रत्यक्षानुकूल्योक्तेर्मोहमूलत्वात्। किंच सविशेषवाक्यानामुपासनाप्रतिपादनद्वारा निर्विशेषपरत्वाभ्युपगमेन निर्विशेषवाक्यानां सगुणविषयतया योजनोक्तेरतीवापेशलत्वात्। अत एव—" तदध्यायन्त्व-

**तथाऽप्यानन्दतीर्थीयं मतमग्राह्यमेव *नः**
**यत्र वैदिकमर्यादा भूयस्याकुलतां+ गता ॥ २ ॥**

व्या०—योजनान्तरं वार्यते । भाष्य एव "शास्त्रयोनित्वात्" (ब्र० १।१।३।३) इति सूत्रस्य निर्गुणौपनिषदत्वव्यवस्थापनार्थत्वेन सगुणसार्वज्ञ्यादिसाधनार्थत्वेन च योजितत्वात् । कल्पतरौ च "अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात्" (ब्र० ४।१। १२।१६) इति सूत्रस्य "अग्निहोत्रादिकं—तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ (ब्र० ४।१।९।१३) इति सूत्रे तदधिगमशब्देन प्रस्तुताय निर्विशेषब्रह्मापरोक्षज्ञानरूपकार्यायैव "विविदिषन्ति" इति श्रुतिदर्शनात्, समस्तकर्मवृन्ददाहकत्वेन कर्मजातिविरोधिनोऽपि ज्ञानस्य नित्ययज्ञादिकर्मविशेषकार्यत्व नायुक्तम्, समस्तवनदाहकस्यापि दवदहनस्य वनान्तर्गतवेण्वादिकार्यत्वदर्शनादिति निर्गुणविषययोजनस्य, अग्निहोत्रादिकं सगुणब्रह्माधिगमरूपकार्यायैव, सगुणविदां केकयादीनां यज्ञाद्यनुष्ठानदर्शनात्, निर्गुणविद्याफलस्येव सगुणविद्याफलस्यापि यज्ञादिजन्यत्वं नायुक्तम्, सगुणविद्याफलस्य सातिशयत्वदर्शनादिति सगुणविषययोजनस्य च" दर्शितत्वात् । एवं च भगवतो नारायणस्य स्वरूपं तस्य चाचिन्त्याद्भुतमाहिमगुणाविभूतिविभवं तदुपासनादिप्रकारं तत्फलभोगक्रमं च श्रुतिस्मृतिन्यायैर्निरूपयितुं प्रवृत्तमानन्दतीर्थीयं मतं कुतो न ग्राह्यं येन तद्दूषणे प्रवृत्तिरित्याक्षेपाभिप्रायः॥ १॥

इममाक्षेपं समादधानः [२]प्रयोजनप्रदर्शनपूर्वकं प्रकरणारम्भं प्रतिजानीते—तथेति ।

यद्यप्येवमुक्तरीत्याऽन्यदीयानि सगुणयोजनान्युपादेयानि तथाऽप्यानन्दतीर्थीयं मतमनुपादेयमेव । अन्यदीयेषु हि योजनेषु सगुणनिर्गुणभेदाभेदादिविषयतया कतिपयेष्वेव सूत्रेषु प्रकारभेदः । अन्येषु तु सूत्रेषु क्वचित्क्वचित्पूर्वपक्षसिद्धान्तरचनाभङ्गिभेदेऽपि फलतो न विवादः । आनन्दतीर्थीये तु योजने

टि०—नसूयवः शुभगुणं निर्दोषमाराध्यमित्यद्धा विश्वविशेषशून्यकथकैरप्यादितः स्वीकृतः । यद्यर्थस्थितिरेकदेशशरणा स प्रत्यवायो भवत्यध्यक्षादिविरुद्धनिर्गुणकथानिर्वाहगर्वावहः" इति परास्तम् ।

१ अर्थानुवादोऽयम् ॥ १ ॥

* नः—वैदिकानामस्माकमित्यर्थः ।

+ आकुलतां विनाशम् ।

२ प्रयोजनमिति—मध्वभाष्ये तत्र तत्र तन्मर्यादयैव दूषणोल्लेखनवैशद्यरूपम् । अत एव वक्ष्यति—"तन्मतदूष्यप्रदेशान्पश्यन्तो विपश्चितः सम्यग्दूषयिष्यन्ति" इति ।

व्या०—प्रायः सर्वत्रैव प्रकारभेदः । सोऽप्यन्येषामसंप्रतिपन्नेषु स्वमात्रकल्पितेष्वर्थेषु तत्र च चतुरकमठमाठरकौण्ठरव्यकौण्डिन्यमाण्डव्यमार्कण्डव्यमौद्गल्यपौष्यायण-पौत्रायणसौत्रायणसौकरायणपाराशर्यायणमाध्यंदिनायनकाषारवकौषारवकाषा-यणकौषायणबृहदुद्दालक——औद्दालकायनकौशिकसौपर्णशाण्डिल्यवत्सगौपव-नभाल्लवेयाग्निवेश्यचतुर्वेदसंहिताचतुर्वेदशिखा——इन्द्रद्युम्नपरमश्रुत्यादिवचनानि, तदनुसारिण्यध्यात्मनारायणसंहिताबृहत्संहितामहासंहितानारायणतन्त्रब्रह्मतन्त्र-पुरुषोत्तमतन्त्रमायावैभवब्रह्मवैवर्तब्रह्मतर्कभविष्यत्पर्वादिवचनानीति चात्यन्त-मप्रसिद्धानामेव साक्षितयोपन्यासः । तदुपन्यासप्रसक्तरवानाप्तत्वशङ्कापरि-

टि०— १ सर्वत्रेति——एतेन किंचिदंशेनापि पूर्वाचार्याननुयायित्वं द्वेषमूलकं तत्तन्मतखण्ड-नलालसत्वं च व्यज्यते ।

२ अप्रसिद्धानामिति—एतेन पूर्वाचार्यसंमतेषु श्रुतिस्मृतिपुराणेषु स्वाभिप्रेतार्थालाभः स्फुटीकृतः । किंच प्रसिद्धश्रुत्युदाहरणे हि तदर्थे विप्रतिपत्तावपि न श्रुतिषु सा, अप्रसिद्ध-तदुदाहरणे तूभयत्रापि सा, प्रयोक्तुरनाप्तत्वं, तत्प्रणीतशास्त्रस्यानुपादेयत्वं चेति बहवो दोषाः प्रादुःष्युः । एतेन—“ न तावदप्रसिद्धश्रुत्युदाहरणं दोषः श्रौतस्मार्तविधायकानां तत्तन्मन्त्राणां च खिलानामेव प्रायेणाऽऽपस्तम्बादिभिः स्वस्वसूत्रेषूदाहरणात् । ऋषित्वादेव खिलश्रुत्युदाहरणं तद्दर्शित्वादेव तेषामुपपद्यत इति चेत्, का तत्र श्रद्धा। नहि ऋषित्वं नाम जातिरस्ति, त्रिकालद-र्शित्वस्यैव तत्त्वात् । “ कल्पाध्यायी ऋषिः ” इति तन्निर्वचनाच्च । त्रिकालदर्शित्वं कल्पा-ध्ययनं चार्वाचीनेषु न संभवतीति चेदयमपि ते कश्चन व्यामोहः । कालत्रयवृत्तान्तदर्शिनां साङ्गसकलवेदाध्यायिनां भट्टपादप्रभृतीनां बहुलमुपलम्भात् । कथमन्यथा भवत्कूटस्थानां शंकरादीनां सर्वज्ञत्वादिकमङ्गी कुरुषे । ग्रन्थप्रणयनादिमहाकार्यदर्शनात्तेषां सर्वज्ञत्वादिकम-ङ्गी कुर्म इति चेत्, किं प्रकृतेऽपि दण्डवारितम् । नन्वस्मदीयग्रन्थप्रवृत्ताविव त्वदीयग्रन्थप्रवृ-त्तेर्न तत्त्वज्ञानमूलत्वं किंतु मोहादिमूलत्वमिति चेत्, कथमवधारितं देवानांप्रियेण त्वया । प्रत्युत “ मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते । मयैव कथितं देवि कलौ ब्राह्मणरू-पिणा ” इति पाद्मवचनेन त्वन्मतस्यैव प्रच्छन्नबौद्धत्वमुच्यते । “ चतुर्भिः सहितः शिष्यैः शंकरोऽवतरिष्यति । सहस्रे द्विशतोत्तरे ” इति त्वदुदाहृतवचनं च विप्रलिप्सामूल-त्वेऽप्युपपन्नमिति न तद्बलेन त्वन्मतस्य प्रेक्षावदुपादेयत्वम्। किंचास्मद्ग्रन्थप्रवृत्तेः शिष्यानु-ग्रहैकप्रयोजनत्वं त्वन्मतस्य मोहशास्त्रत्वं च पुराणेषु स्पष्टमुच्यते । तथा कूर्मपुराणे श्रीमुष्ण-माहात्म्ये पञ्चमेऽध्याये—“ श्रीसूत उवाच—पुरा भागीरथीतीरे निमिना पृष्टवान् मुनिः । नष्टा भागवता धर्माः सच्छास्त्राणि कलौ युगे ॥ इति श्रुतं मया पूर्वं तीर्थयात्राप्रसङ्गतः । कथं नष्टा भविष्यन्ति पुनः स्थास्यन्ति वै कथम् ॥ वद विद्वन्महाबाहो कश्चोद्धारं करिष्यति । श्रीवामदेव उवाच । चतुःसहस्रे द्विशते गते सौगन्धिके वने । निहता भीमसेनेन द्वापरान्ते नृपोत्तम ॥ सौगन्धिकाख्ये निहता ये च क्रोधवशाः खलाः । रुद्रेण निहता ये च त्रैपुराश्च कलौ युगे ॥

टि०—चतुःसहस्रेऽष्टशते मणिमन्तादयोऽसुराः । जनिष्यन्ति ब्रह्मयोनौ दैत्याः सद्धर्मदूषकाः । मिथ्यावादमसच्छास्त्रं करिष्यन्ति कलौ युगे। गोपायिष्यन्ति सच्छास्त्रं सच्छास्त्रपरिपन्थिनः॥ एवं धर्मेषु नष्टेषु शास्त्रेषु च कलौ युगे । देवैर्विज्ञापितो विष्णुर्वायुमाज्ञापयिष्यति । उद्धरस्व महाबाहो मम धर्मान्सनातनान् । इत्याज्ञप्तो भगवता कलौ वायुर्भविष्यति । मध्वनामा यतिरसौ सच्छास्त्राणि करिष्यति । गीतायाश्चोपनिषदां भाष्याणि च करिष्यति । निरासिष्यति पाषण्डान् सच्छास्त्राणि महामतिः । स्थापयिष्यति सद्धर्मान्सच्छास्त्रं व्याकरिष्यति । श्रोष्यन्ति मुनयः सर्वे शुकाद्या देवरूपिणः। इति । तथाऽलकापुरीमाहात्म्ये—कलौ तु पापभूयिष्ठे मिथ्याज्ञानपरायणाः । दूषयिष्यन्ति सद्धर्मान्सच्छास्त्राणि कलौ पुनः । उद्धरिष्यति सच्छास्त्रं कश्चित्कालान्तरे यतिः। राजद्वारं समाश्रित्य पाषण्डान्निरसिष्यति। व्याकरिष्यति सच्छास्त्रं देवब्राह्मणतर्पकः । इति । स्कान्दपुराणे श्रीमुष्णमाहात्म्ये नवमेऽध्याये—कलौ पाषण्डभूयिष्ठे धर्मलेशविवर्जिते । वैवस्वतेऽन्तरे प्राप्ते त्वष्टाविंशे कलौ युगे । ये पुरा भारते युद्धे निहता राक्षसा भुवि । यदा प्रवर्तयिष्यन्ति मार्गं पाषण्डगोचरम् । तदा संप्रार्थितो देवैर्भगवान्हरिरीश्वरः ॥ तत्कर्मदक्षं विनतं मातरिश्वानमादिशत् । वायुस्तु यतिरूपेण जनिष्यति कलौ युगे । स दशप्रमतिर्भूत्वा कलौ धर्मान्वदिष्यति । कृत्वा सच्छास्त्रसंदर्भं स्थापयिष्यति सत्पथम् । एवमेव महादेवि नारायणपरायणाः । काले काले भविष्यन्ति तत्र तत्र महाव्रताः । ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी । कावेरी च महापुण्या तथा दुग्धापगा नदी । एतन्मध्यप्रदेशेषु धर्मः पादेन तिष्ठति । म्लेच्छाक्रान्तं भवेदन्यद्भूतलं तु कलौ युगे । कलौ पाषण्डभूयिष्ठं पुण्यक्षेत्रं भविष्यति । न च विष्णुकथा क्वापि नापि वैष्णवपद्धतिः । आक्रान्तेषु च देशेषु म्लेच्छरूपैश्च राक्षसैः । द्राविडेषु च देशेषु धर्मः स्थास्यति पादतः । पश्चद्राविडगो धर्मो मोक्षहेतुर्भविष्यति । यदा यदा हि धर्मस्य ग्लानिर्भवति पार्वति । अवतीर्य तदा विष्णुर्धर्मगोप्ता स्वयं हरिः । संप्रदायेषु नष्टेषु सर्वधर्मे लयं गते । विष्णोरनुज्ञया भक्ताः कलौ धर्मप्रवर्तकाः । एवं भागवता धर्मा भविष्यन्ति युगे युगे । इत्यादि । तथा ब्रह्माण्डपुराणे क्षेत्रकाण्डे वेङ्कटगिरिमाहात्म्ये तृतीयेऽध्याये शङ्खलिखितसंवादे—त्वं चापि गच्छ शैलेन्द्रं पूर्वं स्वर्णमुखीतटे । यत्र ब्रह्मशिला नाम सरिन्मध्ये च वर्तते । अगस्त्यस्तपसा पश्चाद्गत्यासीन्निरन्तरं वै । पुरा ईशानविष्ण्वादिदेवानां तत्र सन्ति हि । यतिरूपो मातरिश्वाऽष्टाविंशतितमे कलौ । अवतीर्य वसत्यत्र मध्वनामा वरं विभोः । अवाप तपसा पुण्यः प्रीत्या चागस्त्ययोगिनः । तस्स्थापितालये पुण्ये चातुर्मास्यं करिष्यति । शुकः श्रोष्यति सच्छास्त्रं पद्मतीर्थादिहाऽऽगतः । इति ॥ तस्मादापस्तम्बाद्युदाहृतश्रुतिवदस्मदाचार्योदाहृतश्रुतयोऽपि प्रेक्षावदुपादेयाः । श्रुतित्वेन सर्वज्ञदृष्टत्वात् । तथा च स्मृतिः—“ विशेषेक्षणतोऽनूनस्तपस्वी बहुवेदवित् । वेद इत्येव यं पश्येत्स वेदो ज्ञानदर्शनात् ” । इति वदन् परास्तः । आपस्तम्बादिभिः स्वस्वप्रणीतसूत्रेषूदाहृतानां श्रौतस्मार्तकर्मविधायकानां खिलमन्त्राणां मध्वाचार्योपज्ञस्तुत्यकमठादिवचनानामिव श्रुतित्वे विप्रतिपत्त्यभावेन तद्दृष्टान्तोदाहरणस्य मोहमूलत्वात् । तेष्वपि विप्रतिपत्त्यभावेऽनादीनि द्वैतसाधकानि तान्यन्यैरद्वै-

टि०–तद्वेषिभिः कुतो नोदाहृतानि । इतरेषामनृषित्वादिति चेत् । किं तदृषित्वमुदाहरणप्रयोजकं, न जातिः । त्वयैव दूषितत्वात् । नापि सर्वज्ञत्वं सर्वज्ञे परमेश्वर ऋषित्वव्यवहाराभावात् । भट्टपादादिषु कल्पाध्यायिषु सर्वज्ञकल्पेषु तव्द्यवहाराभावे का कथा मध्वाचार्यमात्रे । स्वाचार्यस्य चतुरकमठादिप्रणेतृत्वेन ऋषित्वाभ्युपगमेऽद्यतनानां कामिनीकुचकचादिवर्णयितॄणां नवनवशब्दप्रणेतॄणामपि कुतस्तन्न स्यात् । तेषामपि तथात्वे को विशेषस्त्वदाचार्याणाम् । एतेन "त्रिकालदर्शित्वं कल्पाध्यायित्वं वा ऋषित्वमिति" निरस्तम् । तादृशनिर्वचनस्य कूर्मरोमायमाणत्वात् । "मायावादमसच्छास्त्रम्" इत्यादिवचनं प्राचीनपद्मपुराणेऽनन्तर्गतम् । अद्यतने च वैष्णवंमन्यैः कैश्चित्संग्रथितम् । यतो मध्वरामानुजादिभिः स्वस्वग्रन्थेषु परमतनिराकरणसाधकत्वेन न कुत्रापि निर्दिष्टम् । न वा चतुरकमठादिवचनवदद्वैतनिन्दकं तदुल्लिखितवचनमस्ति । न हि वयं "चतुर्भिः सहेत्यादि" शिवपुराणवचनमूलकमद्वैतप्राशस्त्यं ब्रूमः । किंतु श्रुतिमूलं तदनुसारियुक्तिगाढं सर्वसंप्रतिपन्नस्मृतिपुराणप्रसिद्धं वेदान्तिमतत्वेन दर्शनप्रवर्तकगौतमजैमिन्यादिसंमतं चेति । तद्वत् क्लृप्तश्रुत्यादिसंमतं द्वैतं तर्हि वृथा चतुरकमठादिवचनकल्पना तवाऽऽचार्याणाम् । एवं श्रुतिकल्पकानामाप्तत्वसाधकपूर्वोक्तक्षेत्रमाहात्म्यादीनां यात्रिकप्रतारणाय क्षेत्रजीविभिर्वैष्णवैः कल्पितत्वं स्फुटमेव । तथा हि—"निमिना पृष्टवान् मुनिः" इतितत्रत्यप्रयोगः कथं ? साधुः। कथं वा ? "सौगन्धिके वने । निहता भीमसेनेन" "सौगन्धिकाख्ये निहताः" इति न पौनरुक्त्यम् । कुतो न विरोधः "मणिमन्तादयोऽसुराः । मायावादमसच्छास्त्रं करिष्यन्ति कलौ युगे" "मयैव कथितं देवि कलौ ब्राह्मणरूपिणा"। इत्यनयोर्वचनयोः। तथा "श्रोष्यन्ति मुनयः सर्वे शुकाद्या देवरूपिणः"। "शुकः श्रोष्यति सच्छास्त्रं पद्मतीर्थादिहाऽऽगतः" इति वचनयोश्च । "यदा प्रवर्तयिष्यन्ति मार्गे... । तदा संप्रार्थितो दैवैः... । मातरिश्वानमादिशत्" इति कथं कालनियमोपपत्तिः । एवमशुद्धभूयिष्ठं पुनरुक्तं पूर्वोत्तरविरुद्धं कालविभागरहितं पुराणवचनजातं मध्वाचार्याणां मिथ्याप्तत्वसमर्थनार्थं प्रवृत्तं "किंचिन्मिथ्यात्वसिद्ध्यर्थं मिथ्यार्थान्तरकल्पनम्" इतिन्यायमनुसरति । अथवा श्रुतिकल्पकाशिष्यस्य पुराणवचनकल्पनं "गिरिं भक्ष्यमाणस्य कवाटः पर्पटायते" इति न्यायेन नातीवाऽऽश्चर्यवदिति यत्किंचिदेतत् । "अस्मदाचार्योदाहृतानां प्रत्यक्षश्रुतिसमानशीलत्वेनाविरोधितया धर्मव्यवस्थासंभवात् । उदाहृतपुराणवचनानुसारेण धर्मव्यवस्थापकतया प्रतिपन्नत्वेन परमाप्तस्यास्मदाचार्यस्य श्रुतिवाक्यसमानाकारवाक्यपरिकल्पनायोगाच्च । अनाप्तानां तत्परिकल्पनस्य धर्मव्यवस्थाभञ्जकत्वेन नास्मदाचार्याणामन्यैरविशेषः" इत्यादिवचनजातं पूर्वोक्तहेतुभिरेव प्रतिहतोदयम्। त्वदाचार्यस्याऽऽप्तत्वसिद्धौ श्रुतिकल्पनायोगः। असति च श्रुतिकल्पकत्वे परमाप्तत्वमित्यन्योन्याश्रयाच्च ।किंच त्वदाचार्योदाहृतानां प्रत्यक्षश्रुतिसमानशीलत्वे तयैव स्वार्थसिद्धौ तत्कल्पनवैयर्थ्यात् ।

ननु पूर्वमीमांसायां तत्र तत्र (जै० सू० १. २. २. १९) "ऊर्जं पशूनाप्नोत्यूर्जोऽवरुध्या" इत्यादिखिलश्रुतय एवोदाहृताः । शांकरभाष्ये च "अत एव चोपमा सूर्यकादिवत्" (ब्र० ३. २. ५. १८) इत्यधिकरणे "संभृत्यधिकरणे (ब्र० सू०

टि०–३. ३. १२. २३.)च "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुरूपोऽनुगच्छन्" "ब्रह्मज्येष्ठा वीर्या संभृतानि" इति खिलश्रुती उदाहृते । रामानुजभाष्येऽपि ज्योतिश्चरणाधिकरणे ( ब्र० सू० १. १. १०. २५. ) "इन्द्रः शचीपतिर्बलेन" इति खिलैवोदाहृता । इति नास्माकमेव खिलश्रुत्युदाहरणं दोष इति चेदद्धा, न ह्यन्यैरुदाहृतेति त्वयाऽप्युदाहर्तव्यमिति नियमः । किंच पूर्वमीमांसाशास्त्रो ( जै० सू० १. २. २. १९. )दाहृता श्रुतिर्न त्वदुक्तानुपूर्वीविशिष्टा, किंतु "ऊर्ग्वा उदुम्बर ऊर्क् पशव ऊर्जैवास्मा ऊर्जपशूनवरुन्धे" इत्यन्यादृशानुपूर्व्यवच्छिन्ना, सा च तैत्तिरीयसंहितायां ( तै० सं० कां० २ प्र० १. अ० १. ) स्पष्टमुपलभ्यते । तेन तस्याः खिलत्वं कल्पयता त्वयाऽनाघ्रातवेदत्वमनधीतपूर्वतन्त्रत्वं च स्वस्य प्रकटीकृतम् । अस्मदाचार्यैस्तु "यथा ह्ययम्" इति मन्त्रस्य कठशाखायां प्रसिद्धस्यैवोदाहृतत्वेन, तैत्तिरीयब्राह्मणे ( तै० ब्रा० अ० २. प्र० ४. अ० ७. ) विद्यमानस्यैव "ब्रह्मज्येष्ठा वीर्या संभृतानि" इति मन्त्रस्य राणायनीयत्वेनाप्युदाहृतत्वेन च न दोषः । तावता खिलत्वाभावात् । भाष्यगतखिलशब्दो विधिनिषेधरहितपर इति रामानन्दीये व्याख्यातत्वाच्च । रामानुजभाष्योदाहरणमप्ययुक्तम् । तस्याप्यप्रामाणिकतया तदुदाहरणेन स्वाचार्यस्यानाप्तत्वशङ्कानतिवृत्तेः । अपि चाऽऽपस्तम्बादिदृष्टान्तेन न स्वाचार्यदोष आच्छादनीयः । आपस्तम्बादिभिः स्वोदाहृतानां खिलाखिलत्वविभागस्य प्रदर्शितत्वेन त्वदाचार्यस्येव तेषां प्रतारकत्वाभावेन वैषम्यात् ।

किंच पुराणवचनेन स्वाचार्यस्याऽऽप्तत्वं साधयतस्तव वैपरीत्यमेव सिध्येत् । तथाहि–सौरपुराणे ( अ० ३९ ) ब्रह्मोवाच—भविष्यं कथयिष्यामि तच्छृणुध्वं समाहिताः । घोरे कलियुगे प्राप्ते म्लेच्छैर्व्याप्ते भुवस्तले ॥ १ ॥ सर्वाचारपरिभ्रष्टा भविष्यन्ति नराधमाः । तदाऽऽन्ध्रदेशमध्ये तु दाक्षिणात्यो भविष्यति ॥ २ ॥ ब्राह्मणो दुर्भगः कश्चिद्विधवाब्राह्मणीरतः । तस्य पापिष्ठविप्रस्य व्यभिचारात्सुतोऽनघाः ॥ ३ ॥ भविष्यति गुणान्वेषी दैवादध्ययनोत्सुकः । पद्मपादुकमाचार्यं वरं वेदान्तवादिनम् ॥ ४ ॥ अद्वैतागमबोद्धारं प्रणम्य प्रार्थयिष्यति । विप्रोऽहं मधुशर्माऽस्मि स्वामिन्मां पाठय प्रभो ॥ ५ ॥ इत्यादिना मध्वाचार्यस्यानाप्तत्वस्फुटीकरणात् । तत्रैव ( ४० अ० ) मध्वाचार्यस्य किमर्थः शिवद्वेष इति ऋषिभिः पृष्टः सूतो ब्रवीति—"घोरे कलियुगे प्राप्ते श्रीशंकरपराङ्मुखाः । भविष्यन्ति नरास्तथ्यमिति द्वैपायनोऽब्रवीत् । इत्यादिना शिवकृतकामदहनेनातिदुःखिता तदीयवल्लभा रतिस्तन्मित्रवसन्तमधुकलिमोहादीन् प्रति वक्तीति प्रस्तुत्य "रतिरुवाच–मन्यते घातकः सर्वैर्लोके पूज्यो भवेदयम् । तत्र विघ्नः प्रकर्तव्यो येन केनापि हेतुना ॥ १ ॥ अस्यापकीर्तिर्वक्तव्या न चलेद्यदि किंचन । तेन मे दुःखशान्तिः स्यात्किंचिन्मात्रं न चान्यथा ॥२॥ इति तया प्रार्थिताः कन्दर्पसुहृदो वसन्तादयः परस्परं समालोच्य हिरण्यगर्भवरप्रदानेनेदं कार्यं करिष्याम इति निश्चित्य तं प्रति तपश्चेरुः । ततस्तुष्टो भगवान्ब्रह्मा तैः प्रार्थितो "भवतां कलावभीष्टसिद्धिर्भविष्यति" इत्युक्त्वाऽन्तर्दधे । ततः कलौ प्राप्त एवं भविष्यतीति

टि०-सूत ऋषीनवोचत् " तदा वसन्तः कर्नाटतिलङ्गादिकदूषकः । मधुनामा च विधवाक्षेत्रे विप्राद्भविष्यति ॥ १ ॥ गोलकः स तु पापिष्ठः पद्मपादुकमीश्वरम् । वेदान्तव्याख्यानरतं शिष्यत्वेनार्चयिष्यति ॥ २ ॥ शास्त्रं पूर्णं ततोऽधीत्य स्थित आह्निकवार्जितः । किमग्निहोत्रं को यागो हेतुवादं करिष्यति ॥ ३ ॥ गुरुराकर्ण्य तद्वाक्यं ब्राह्मणो न भवेदयम् । इति निश्चित्य तं दुष्टं वक्ष्यति श्रुततद्वचाः ॥ ४ ॥ गुरुरुवाच । को वर्णस्तव मे ब्रूहि यथार्थं वेददूषक । कर्मब्रह्मोद्भवद्वेष्टा नोत्पतिर्ब्राह्मणात्तव ॥ ५ ॥ मधुरुवाच । ब्राह्मणादहमुत्पन्नो ब्राह्मण्यां च न संशयः । सत्यं वदामि नो मिथ्या कथं मां पश्यसे गुरो ॥ ६ ॥ गुरुरुवाच । त्वन्माता केन दत्ताऽरे कस्य पुत्री कथं कदा । कस्मै दत्ता च विधिना केन तद् ब्रूहि मा चिरम् ॥७॥ मधुरुवाच । विधवा जननी नाथ ब्राह्मणेन तपस्विना । गर्भिणी समभूत्तस्मादयं देहस्ततोऽभवत् ॥ ८ ॥ गुरुरुवाच । कपटेन यतः शास्त्रं मत्तोऽधीतं दुरात्मना । तेन सिद्धान्तमर्यादा कदाचिन्मा स्फुरत्वियम् ॥ ९ ॥ मधुरुवाच । भविष्यति महाभाग वचनं तव नान्यथा । पूर्वपक्षो मम हृदि प्रादुर्भवतु निश्चलः ॥ १० ॥ गुरुरुवाच । अन्धता तव सिद्धान्ते पूर्वपक्षे च पाटवम् । भवत्वेवं परं त्वेकं पापाः शिष्या भवन्तु ते ॥ ११ ॥ सूत उवाच । मधुनामा ततः प्राप्य शापं तं दुष्टबुद्धिमान् । बादरायणसूत्राणां व्याख्यानं स करिष्यति ॥ १२ ॥ मध्वाचार्यस्ततो भावाद्दाक्षिणात्यो महान् कलौ । तच्छिष्याः प्रतिशिष्याश्च नाऽऽर्यावर्ते न चोत्कले ॥ १३ ॥ पञ्चवर्षस्तु सन्यासी पठित्वा दुष्टबुद्धिमान् । शिष्योपशिष्यसंयुक्तो हेतुवादं करिष्यति ॥ १४ ॥ इत्यादिना । एवं च मध्वाचार्याणां मधुनामकराक्षसावतारत्वस्य रतिसमाश्वासनार्थं शिवद्वेषस्य च स्पष्टत्वेनाऽऽप्तत्वशङ्कैव प्रतिहतोदया । किंच तत्रैव ( ४० अ० ) जगतस्तात्त्विकत्वं वदतो मिथ्यावादित्वं प्रच्छन्नचार्वाकत्वं च स्पष्टमेव स्मर्यते । " तत्त्वं संसार इत्येव न बाध्यः सत्य एव हि । वदत्यतस्तत्त्ववादी मिथ्यावादी स उच्यते ॥ १ ॥ प्रच्छन्नोऽसौ महादुष्टश्चार्वाको मध्वसंज्ञकः । भविष्यति कलौ विप्राः शिवनिन्दाप्रवर्तकः ॥ २ ॥ इत्यादि । अद्वैतवादिनस्तथ्यवादित्वं च तत्रैव स्मृतम् " मिथ्याभूतः प्रपञ्चोऽयं मया निर्मित इष्यते । मायावादिन इत्येते वस्तुतस्तथ्यवादिनः " इति । किंचास्य शिवद्विष्टमतस्य जनव्यामोहार्थं देवैः प्रेषितेन बृहस्पतिना चार्वाकादिमतस्येव करणं स्पष्टमेवोपलभ्यते सौरपुराणे ( अ० ३८ ) देवगुरुसंवादादिषु । ननु सौरपुराणस्य प्रामाण्यं नाभ्युपगच्छामः । तस्याभिव्यक्ततमोगुणेन व्यासेन रचितत्वादिति चेत्, महदापादितं देवानां प्रियेण । मध्वाचार्याप्तत्वसाधकक्षेत्रमाहात्म्यादीनां प्रामाण्यमभ्युपगच्छन् सौरस्य प्रामाण्यं प्रतिक्षिपन्कथं न लज्जितोऽसि । " द्वापरे द्वापरे विष्णुर्व्यासरूपी महामुने " इत्यभियुक्तोक्त्या व्यासस्य रामकृष्णादिवद् विष्णववतारत्वेन तस्मिन्नापादितं तमोगुणत्वं विष्णावेवाऽऽरोपितमिति प्रदर्शितं महत्पाण्डित्यमित्यलं मृतमारणेन । बादरायणस्य पुराणानां च तामसत्वाभावो दीक्षितेन्द्रकृते शिवतत्त्वविवेके ( श्लो० ४७ ) समानुजशृङ्गभङ्गे च स्पष्ट इति नात्र प्रपञ्च्यते ॥ १ ॥

व्या०—हाराय हनुमद्भीमसेनक्रमेण वायोः स्वयं तृतीयावतार इत्युद्घोषः । तत्र च साक्षितया "प्रथमो हनुमान्नाम द्वितीयो भीमसेनकः । पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः" इति स्मृतिवचनमस्तीति स्वयमेव तदुदाहरणम्, बळित्था तद्वपुषे धायि दर्शतं ( ऋ० सं० ३ । २ । ८ ) इत्यादिऋग्वेदमन्त्रस्य स्वकल्पितवाय्ववतारत्रयपरतया प्रदर्शनमित्यादिप्रामाणिकमर्यादोल्लङ्घनं भूयः संदृश्यते । अथापि "युक्तियुक्तं वचो ग्राह्यं नतु पुरुषगौरवम्" इति न्यायेन तन्मतं श्रद्दधीमहि यदि तत्रोपपन्नं किंचिदाकलयेम। नत्वेवम् । प्रायेण हि तन्मते स्वमात्रहृदयारूढानि वचनान्येवोपजीव्यानि नतु न्यायाः । ये तु न्यायाः प्रदर्शितास्तेऽप्यन्त्यन्तशिथिला एव क्वचित्क्वचिदाश्रिताः । पूर्वमीमांसामर्यादाऽप्यसामञ्जस्येनैव नीता । प्रायेणासाधुभिरेव शब्दैर्व्यवहारः । श्लोकरचनायामन्वयासंभवो वृत्तान्यथाभावश्चाधिकः । सर्वमेतत्तदीयभाष्यानुव्याख्यानभारततात्पर्यसंग्रहादिदर्शिनां स्पष्टमेव । अत्रापि तत्र तत्र तदीयवचनोदाहरणे कियदपि स्पष्टी

टि०— १ इयं ऋक् आग्नेयक्रतौ—आश्विनशस्त्रत्वेन प्रसिद्धानां षण्णां मध्ये द्वितीया । "देवस्य—द्योतनशीलस्य दर्शतं—सर्वैर्दर्शनीयं तत्—प्रसिद्धं भर्गः—तेज इत्था—इत्थं सर्वैर्दृश्यमानप्रकारेण वपुषे—शरीरव्यवहाराय दार्ढ्याय धायि—धार्यते सर्वैः । बळित्थेत्युभे अपि सत्यनामनी । तन्नामसु पाठात् । जाठराग्निना भुक्तानां जरणेन शरीरधारणं प्रसिद्धम्" इत्यर्थिका । अनेनाग्निशंसनेनाऽऽग्नेययागस्य प्राशस्त्यं द्योत्यते । एतेन "वाय्ववतारत्रयपरतयाऽस्या ऋचो वर्णनं वैदिकमर्यादोल्लङ्घनस्य महल्लिङ्गमिति सूचितम् ।

२ स्पष्टमेवेति–पूर्वमीमांसोल्लङ्घनं तावत्–जिज्ञासासूत्रे न्यायसुधायां "सार्वाणि सूत्राणि प्रत्येकमनेकवेदवाक्यविचारपरत्वादवान्तरा ब्रह्मविद्या स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते" इति श्रौतार्थवादसामर्थ्यात्सर्वास्वपि ब्रह्मविद्यास्वाद्यन्तयोरोंकारस्योहः कार्य इति गम्यते" इति । तथा "प्रदानवदेव हि तदुक्तं" ( ब्र० सू० ३. ३. ४४ ) श्रवणगुरुप्रदानयोः प्रधानेतिकर्तव्यतारूपयोर्गुरुप्रदानं प्रबलमित्युपपादनार्थं—तत्त्वप्रकाशिकायां—"न चेतिकर्तव्यतात्वेन दौर्बल्यं, यज्ञीयहिंसायामितिकर्तव्यताया एव प्राबल्यदर्शनात्" इति । तथा "भूम्नः क्रतुवज्ज्यायस्त्वम्" ( ब्र० सू० ३. ३. ५७ ) इति सूत्रे तत्त्वप्रकाशिकायां "यथा खलु दीक्षणीयाप्रायणीयोदयनीयासवनत्रयावभृथात्मकस्य क्रतोः सर्वयागेष्वनुवर्तनमेव साफल्यात्, अन्यथा वैफल्यात्, ज्यायस्त्वं ततश्च सर्वैः कर्तव्यत्वमिति । तथा द्वादशाहवदुभयविधं बादरायणोऽतः" ( ब्र० सू० ४. ४. १२. ) इति मध्वभाष्ये "द्वादशाहः क्रत्वात्मकः सत्रात्मकश्चेत्युक्तम् । अत्र सर्वत्र मीमांसोल्लङ्घनप्रकारो ग्रन्थकृता ( २५ श्लो० ) प्रकटी करिष्यते ।

अतः पञ्चाधिकरणीं लक्षीकृत्यैव तन्मते ।
दूष्यस्थलानि सर्वत्र सूच्यन्ते सुधियां मुदे ॥ ३ ॥
आत्मा ब्रह्मेत्यधीतः श्रुतिशिखरगणैर्निर्विशेषश्च सर्वैः
किं तत्र स्वप्रकाशे गुणलवरहिते वस्तु शास्त्रेण चिन्त्यम् ।
इत्याक्षेपो गुरूणां नतिचयविषये स्वाप्रणम्यत्ववादं
श्रुत्यन्तानां निरूप्यः स यदि जडमते केन शास्त्रस्य न स्यात् ॥४॥

व्या०—भविष्यति । तस्मादेवंभूतं मतं वैदिकानामनुपादेयमेवेति तन्मतसिद्धान्त-मीक्षत्यधिकरणान्तां पञ्चाधिकरणीं दूष्यतया लक्षीकृत्य तन्मते सर्व-त्रापि दूषणीयप्रदेशास्तन्मतदूषणकौतुकिनां विदुषां मुदे सूच्यन्ते । तथा च यद्यपि मदुक्तदूषणानि सम्यङ्न भवेयुस्तथाऽप्यस्मिन्प्रकरणे संगृह्य प्रदर्शिता-न्तन्मतदूष्यप्रदेशान्पश्यन्तो विपश्चितः सम्यग्दूषयिष्यन्तीति तदर्थं प्रकरण-मारभ्यत इत्यर्थः ॥ २ ॥ ३ ॥

॥ इत्युपोद्घातप्रकरणम् ॥

तत्र प्रथमाधिकरणपूर्वपक्षमनूद्य दूषयति—आत्मेति । अत्रेदं परकीयमधिक-रणं "ब्रह्ममीमांसाशास्त्रमिदं नाऽऽरम्भणीयं, निर्विषयत्वात् । न तावत् सविशेषं

टि०—अपशब्दैर्व्यवहारः प्रायेण मध्वकृतग्रन्थे दृश्यते। तत्र दिङ्मात्रमत्रोदाहरामः। तथा हि—ईक्षते ( ब्र० सू० १।१।५ ) इति सूत्रस्यावतरणे मध्वभाष्ये "न तच्छब्दगोचरम्" इति प्रयु-क्तम्। तत्र गोचरशब्दस्य क्लीबत्वं प्रामादिकम्। तस्य नित्यपुंस्कत्वात्। तथा चोक्तं लिङ्गानु-शासने पुमानित्यधिकारे—खाजन्तश्चेति । उदाहृतं च वृत्तिकृता । "गोचरो विषयः" इति । प्रयुक्तं च श्रीहर्षेण—( नै० २. ९५ ) परिखावलये छलेन या न परेषां ग्रहणस्य गोचरः" इति । किंच तदीयभारततात्पर्यनिर्णये—( अ० ३२ ) "हरिं वदन्तीति समर्थयित्वा" इति । अत्र समर्थ्येति भवितव्यम् । ल्यपोऽवश्यंभावात् । तथाऽनुव्याख्याने—( ब्र. सू. उपो-द्धाते ) मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः । इति । अत्र मिथ्याया इत्यसाधुः । तस्य स्वरादिगणे पाठात् । तथा ( ब्र. सू. २. १. ४. ) सभासभायप्राश्नीकपूर्वस्तु स्पर्धिना-मपीत्यत्र प्राश्नीकेति दीर्घोऽसाधुः । एवं सांख्याधिकरयोः ( ब्र. सू. २. २. २. ) "साक्षा-दनुभावारूढं शक्यतेऽपोदितुं क्वचित्" इत्यत्रापवदितुमिति वक्तव्ये संप्रसारणमसाधु । तथा तत्रैव "स्वनाशार्थं च को यतेत्" इत्यत्र परस्मैपदप्रयोगो हेयः । एवं बहवः सन्त्यप-शब्दाः । विस्तरभियोपरम्यते । विस्तरस्तु भट्टोजीदीक्षितकृते तत्त्वकौस्तुभे द्रष्टव्यः ॥ २ ॥

॥ इत्युपोद्घातप्रकरणम् ॥

१ वादमिति—अनुसरतीति शेषः ॥
२ यदीति—तर्हीति शेषः ॥
३ जडमत इति—शास्त्रमर्यादानभिज्ञ इत्यर्थः ॥

व्या० ब्रह्म विषयः। तत्र मानाभावात्। वेदान्तानां निर्विशेषजीवस्वरूपमात्रविषयत्वात्। न च जीव एव ब्रह्मेति स एव विषयः। तस्य स्वप्रकाशत्वेनाहमिति सर्वानुभवसिद्धत्वात्। निर्विशेषे च तत्र निरूपणीयानां धर्माणामभावादिति पूर्वः पक्षः। सिद्धान्तस्तु—भवेदेवं निर्विषयत्वं, यदि विचार्यत्वाभिमतं ब्रह्म जीवरूपत्वेन संशयविपर्ययानास्पदं स्यात्। नत्वेवं, तस्य "तद्विजिज्ञासस्व। तद्ब्रह्मेति" (तै० उ० ३।१) ब्रह्मविचारविषये धर्मिणि श्रुतेन ब्रह्मशब्देनैव गुणपूर्तिवाचिनाऽल्पगुणाज्जीवनिकायाद् विलक्षणत्वसिद्धेः। तस्य गुणपूर्तिवाचिता च "अथ कस्मादुच्यते परं ब्रह्मेति बृहन्तो ह्यस्मिन्गुणा इति" इति श्रवणात्। स्वरूपतो गुणतश्चापरिच्छिन्नत्वरूपविषयावयवशक्त्यनुरोधाच्चेति" तत्र निर्विशेषजीवस्वरूपस्य ब्रह्मणः श्रुत्यन्तनिरूप्यत्वमङ्गीकृत्य शास्त्रनिरूप्यत्वासंभवपूर्वपक्षो गुरूणां

टि०— १ निर्विशेषजीवस्वरूपस्येति—प्रत्यगभिन्नं ब्रह्म तात्पर्याद्वेदान्तप्रतिपाद्यं "यत्परः शब्दः" इति न्यायात्। तात्पर्यं च वेदान्तानामनधिगतार्थ एव। "अर्थेऽनुपलब्धे तत्प्रमाणम्" इत्यभियुक्तोक्तेः। तन्निर्णायकन्यायसूचकशास्त्रस्य श्रुतिसमानविषयत्वाभावे तन्निर्णायकत्वासंभवेन वैयर्थ्यमेव स्यात्। अतः शास्त्रेण स्वोपजीव्याशयोऽवश्यमपेक्षणीय इति वेदान्तसमानार्थत्वं शास्त्रस्याकामेनाप्येष्टव्यमिति निर्विषयत्ववादः शास्त्रमर्यादाऽज्ञानमूल एवेति भावः। एतेन "अयमनुक्तोपालम्भः। नह्यस्माभिर्वेदान्तानां निर्विशेषस्वरूपपरत्वेऽप्यनधिगतार्थत्वेन प्रामाण्यमङ्गीकृत्य ब्रह्ममीमांसाशास्त्रस्याधिगतार्थत्वेनानारम्भपूर्वपक्षः क्रियते। किंतु श्रुतिस्मृतीनां तदुपकरणीभूतब्रह्ममीमांसायाश्च निश्चितार्थतया प्रेक्षावदनुपादेयत्वरूपमनारम्भणीयत्वमिति। संदिग्धविपर्यस्तान्यतरं प्रत्येव शास्त्रस्य प्रवर्तनीयत्वात्। तदुक्तं मायावादखण्डनटीकायां—"परं ब्रह्म प्रतिपादयितुं सकलश्रुतिस्मृतीनां तदुपकरणीभूतब्रह्ममीमांसायाश्च प्रवृत्तिरिति तत्त्वम्" इति। उक्तं च चन्द्रिकायां—"यथार्थवादाधिकरण इत्यारभ्य तथेहापि स्वतःसिद्धप्रत्यगात्मानुवादका वेदान्ता न विचार्याः" इति परास्तम्। वेदान्तानां निर्विशेषजीवपरत्वाभ्युपगमेऽनधिगतार्थगन्तृत्वस्यापरिहार्यत्वात्। नहि निर्विशेषजीवस्वरूपं वेदान्तव्यतिरिक्तप्रमाणप्रमितं येन वेदान्ता अनुवादकाः स्युः। अत एव चन्द्रिकोक्तिः प्रतिहतोदया। विचारितवेदान्तैर्निर्विशेषजीवनिश्चयसंभवेऽपि विचारात्मकशास्त्रस्य संदिग्धविपर्यस्तविषयकत्वसंभवात्। एतेनैव "वेदान्तानां प्रमाणशिखामणित्वेऽप्यनधिगतार्थकत्वनियमाभावस्य वक्ष्यमाणत्वात्। विचारशास्त्रस्य संदिग्धविषयावश्यकत्वस्य नैयत्याच्च। अहमहमिति सर्वदैव प्रकाशमाने निर्विशेषजीवस्वरूपे कस्याप्यविस्मरणाप्रसक्त्या त्वदुक्तरीत्या मीमांसाशास्त्रस्याऽऽरम्भणीयत्वोपपादनायोगात्" इति निरस्तम्। तेषामनधिगतार्थत्वाभावेऽप्रामाण्यस्योक्तत्वात्। जीवस्याहमिति भासमानत्वेऽपि निर्विशेषत्वसच्चिदानन्दत्वादीनां तत्राप्रकाशेन संशयविपर्याससत्त्वेन शास्त्रारम्भणीयत्वसंभवाच्च। विचारशास्त्रस्य संदिग्धविषयकत्वस्य पूर्वपक्षिण इष्टत्वादिति दिक्।

व्या०—प्रणतिपरम्पराविषये महापुरुषे तच्छिष्योदितस्वप्रणामानर्हत्ववादमनुकरोति। प्रमाणशिखामणयो हि वेदान्ता नितान्तमनधिगतार्थमन्विच्छन्ति । पौरुषेयाणि तु शास्त्राण्युपायान्तरेणावगन्तुं शक्येष्वप्यर्थेषु श्रोतृबुद्धिसौकर्यार्थं प्रवर्तमानानि स्वोक्तमप्यर्थमविस्मरणार्थमाम्रेडयन्ति । न तथाऽनधिगतार्थव्यसनितामनुभवन्ति । ततश्च यदि वेदान्ता अपि स्वप्रकाशजीवस्वरूपमात्रे कर्तृत्वभोक्तृत्वादिधर्मरहिततया कर्मशेषताममप्रतिपद्यमाने स्वातन्त्र्येण पर्यवस्यन्ति तदा शास्त्रस्य तत्र पर्यवसाने काऽनुपपत्तिः। पूर्वपक्षिणाऽपि हि वेदान्तानां प्रामाण्यसंरक्षणाय स्वप्रकाशजीवस्वरूपमात्रपरत्वेऽप्यनधिगतार्थत्वमुपपादनीयम् । ततश्च शास्त्रस्यापि तेन सविषयकत्वे काऽनुपपत्तिरिति भावः॥ ४ ॥

टि०— १ वादमिति—तस्य मौढ्यौद्धत्यमूलकत्ववत्त्वत्पूर्वपक्षस्यापि तथात्वमिति भावः ।

२ अनधिगतेति—इदमुपलक्षणमर्थेऽबाधितत्वप्रयोजनवत्त्वयोः । तेन वेदान्तानामभियुक्तोक्तप्रमाजनकत्वरूपं प्रामाण्यं स्फुटीकृतम् ।

३ वेदान्ता इति—वेदान्तानामपौरुषेयत्वेन निरस्तसमस्तदोषतया बोधकत्वेन स्वतः प्रामाण्यम् । ते तु निर्विशेषजीवस्वरूपं बोधयन्ति चेत्तदर्थनिर्णयार्थमुत्थापितस्य शास्त्रस्यापि तद्बोधकत्वमकामेनाप्यवश्यमभ्युपेतव्यम् । अन्यथा शास्त्रस्य श्रुतिमूलत्वासिद्ध्याऽकाण्डताण्डवता स्यादिति भावः । एतेन “कर्तृत्वभोक्तृत्वाद्युपहिततया कर्मशेषतां प्रतिपद्यमानस्याहंधीसिद्धजीवस्यैव पूर्वपक्षिणा श्रुतिमीमांसारूपशास्त्रविषयत्वमापाद्य तदनारम्भणीयत्वमुक्तम् । स्वप्रकाशजीवस्वरूपमात्रे कर्तृत्वादिरहिततया कर्मशेषतामप्रतिपद्यमाने वेदान्तानां पर्यवसानं नाभ्युपगतम् । शास्त्रप्रत्यक्षविषयात्मद्वैविध्यं पूर्वपक्ष्यनभिमतं च” इत्यपास्तम् । अहंधीसिद्धजीवस्य शास्त्राप्रतिपाद्यत्वे तदुत्थापकाज्ञातज्ञापकवेदान्ताप्रतिपाद्यत्वस्यैवाऽऽपादनीयतया शास्त्राविषयत्वापादनस्यायुक्तत्वात्।

कर्तृत्वादिरहिते जीवे वेदान्तस्यापर्यवसाने वैयर्थ्याच्च । निर्विशेषजीवस्याहंधीगम्यत्वं नास्ति कर्तृत्वादिमत एव तथात्वमित्युक्तत्वाच्च। जीवस्य निर्विशेषत्वं च पूर्वपक्षिणा तस्य वेदान्तप्रतिपाद्यत्वप्रतिपादनायैवाभ्युपगतम् । अन्यथा वेदान्तस्याप्रामाण्यापत्त्या पूर्वपक्षस्यैवानुत्थितेः । यत्तु “पूर्वपक्षे जीवनिर्विशेषत्वोक्तिः “तत्र प्रत्यक्षादिना प्रतीयमाना विशेषाः कल्पिता न मुमुक्षुज्ञेयाः” इत्येवंपरा । तदुक्तं चन्द्रिकायाम् “अन्यस्य च सत्यस्याभावादिति । प्रत्यक्षसिद्धकर्तृत्वभोक्तृत्वसुखदुःखाद्यतिरिक्तविशेषाभावाभिप्राया वा” इति । तन्न । श्रुतीनां पूर्वपक्षेऽनुवादकत्वापत्तेः । न चेष्टापत्तिः । तदुक्तं चन्द्रिकायां- “शुद्धचैतन्यमात्रबोधने श्रुतेरनुवादकत्वं वायुर्वै क्षेपिष्ठादिवाक्यवद्विद्वद्वाक्यवच्च, न्यायप्राप्तत्वादिति” इति वाच्यम्। वायुक्षेपिष्ठत्वप्रतिपादकवाक्यस्य तात्पर्यविषयार्थान्तरसत्त्वेन त्वन्मते वेदान्तानां निर्विशेषजीवातिरिक्ततात्पर्यविषयाभावेन वैलक्षण्यात्। शुद्धचैतन्यमात्रबोधने वेदान्तातिरिक्तप्रमाणाभावेन तेषामनुवादकत्वोक्तेरज्ञानमूलत्वात्। किंच पूर्वपक्षे वेदान्तानामप्रमाणभू-

प्रामाण्यं सिद्धमेव ह्यकृतकवचसां त्वन्मते तर्कशास्त्रे
शास्त्रस्याङ्गं यदस्य स्मरसि हरिकृतं ब्रह्मतर्काभिधानम् ।
तच्चेद्भज्येत नित्यं स्फुरदगुणलवप्रत्यगात्मैदमर्थ्ये
तन्निर्वाहाय तेषां सगुणविषयता पूर्वपक्षेऽपि ते स्यात् ॥५॥

---

व्या०—ननु पूर्वपक्षिणा वेदान्तानां प्रामाण्यं न संरक्षणीयं, ते ह्युपक्रमादिन्यायैः स्वप्रकाशजीवस्वरूपमात्रपरा एव । तस्य चानधिगतत्वं कथमपि समर्थयितुं न शक्यते । तथा सति यदि तेषां प्रामाण्यं न स्यात्, मा भूत् न्यायलब्धार्थे किं कुर्मः । अत एव तदर्थमधिकृतं शास्त्रं नाऽऽरम्भणीयं सर्वथैव विषयालाभादिति पूर्वपक्षः क्रियते । काऽत्रानुपपत्तिरित्याशङ्क्याऽऽह—प्रामाण्यमिति । इत्थं तव मतमस्ति—"विष्णुना नारायणरूपेणातिविस्तरेण कृतं पुनर्व्यासरूपेण तेन संक्षिप्तं च ब्रह्मतर्काभिधानं शास्त्रम् । तदेव चतुर्दशविद्यास्थानान्तर्गतं तर्कशास्त्रं ननु गौतमादिप्रणीतम् । तच्चास्य मीमांसाशास्त्रस्याङ्गम् । इदं हि सर्वेषां कर्मब्रह्मका-

---

टि०—तानां गतिकल्पनस्यायुक्तत्वात् । न चेष्टापत्तिः, अत एव चन्द्रिकायां "यच्चाप्रमाणभूतवेदान्तवाक्यगतिर्न पूर्वपक्षे वाच्या, तदाच्छादनेन तत्प्रवृत्तेरिति कंचन पक्षमुपन्यस्य यद्वा स्वर्गकामाधिकरणपूर्वपक्षे विश्वजिदधिकरणपूर्वपक्षे च फलालाभेन नियोज्याभावेन च "विश्वजिता यजेत" इत्यादिवाक्यमिवोक्तरीत्या विषयाद्यभावेनोपपत्तिविरोधात्तज्जिज्ञासत्वेत्यादिकमप्रमाणमिति" पक्षान्तरमुपन्यस्तम् । तस्मात्पूर्वपक्षे वेदाप्रामाण्याभ्युपगमेऽपि न काऽप्यनुपपत्तिरिति वाच्यम् । भवन्मते ब्रह्मतर्काधिकारिण एव मननात्मकब्रह्ममीमांसायामधिकारात । तत्र स्थापितवेदप्रामाण्यज्ञं प्रतीदानीं वेदाप्रामाण्यकथने व्याघातात । तदुक्तमनुव्याख्याने "प्रमाणन्यायमीमांसा क्रियते तर्कशास्त्रतः । मानन्यायैस्तु तत्सिद्धैर्मीमांसामेयशोधनम् । इति । स्वर्गकामाधिकरणपूर्वपक्षस्यानधिगतार्थगन्तृत्वरूपप्रामाण्यापरित्यागेन फलालाभेनाननुष्ठानमात्रपरत्वात् । न च वेदप्रामाण्यस्य सिद्धत्वेऽपि तदाच्छादनेन पूर्वपक्षप्रवृत्तिरिति वाच्यम् । पूर्वपक्षस्यात्यपेशलत्वापत्तेः । शास्त्रारम्भे मन्मतरीत्या पूर्वपक्षसंभवे कृत्वाचिन्तयाऽधिकरणप्रवृत्तेरतिगर्ह्यत्वापत्तेश्च । चन्द्रिकायां श्रोतव्य इति विचारविधानानर्थक्यापत्तेश्च । न च तदाच्छाद्य पूर्वपक्षः, विचारविधायकन्यायव्युत्पादकाधिकरणे तदयुक्तत्वात् । अत एव "प्रमाणन्याये" इत्याद्यनुव्याख्यानोक्तिरन्यपरेत्यपास्तम् । वेदप्रामाण्योपपादकन्यायस्यापि प्रथमाधिकरणे निबन्धनापत्त्या तदकरणेन न्यूनतापत्तेः । न चातःशब्देनैव तथाविधन्यायोऽपि सूचित इति वाच्यम् । "अतःशब्दो हि हेत्वर्थे समुदीरितः । परस्य ब्रह्मणो विष्णोः प्रसादादिति वा भवेत्" इति त्वदीयभाष्यविरोधात् । वेदाप्रामाण्यकथने तदर्थं विष्णुकृतब्रह्मतर्कस्य वैयर्थ्यापत्तेः । एतेन "तर्कशास्त्रस्य मीमांसाङ्गत्वं च तन्निर्णीतस्वरूपसंख्याबलाबलादिभिः प्रमाणैरिह मेयशोधनादिति मतान्तरमुक्तमित्यन्तेनैतत्स्पष्टमेवोक्तम् । यद्वा ब्रह्मतर्के वेदप्रामाण्यस्य सिद्धत्वेऽपि तत्र साधकन्यायोपमर्दात्पूर्वपक्षप्रवृत्तिरिति" निरस्तम् । कल्पनस्य

व्या०–ण्डरूपाणां वेदानां सकलगुणपूर्णो भगवानेव मुख्यार्थ इति निर्णयाय प्रवृत्तम्। तत्त्वेतन्निर्णेयार्थानां वेदान्तानां तदर्थनिर्णायकानां प्रत्यक्षादीनामुपक्रमादीनां श्रुतिलिङ्गादीनां च स्वरूपप्रामाण्यतद्बलाबलानिर्णायकत्वेनैतदपेक्षितमिति। तदुक्तमनुव्याख्याने–( ब्र० सू १. १. १ ) प्रमाणन्यायमीमांसा क्रियते तर्कशास्त्रतः। मानन्यायैस्तु तत्सिद्धैर्मीमांसा मेयशोधनम्। ब्रह्मतर्कं च कृतवान् स एव भगवान्प्रभुः। पञ्चाशत्कोटिविस्तारान्नारायणतनौ कृतात्। उद्धृत्य पञ्चसाहस्रं भगवान् बादरायणः॥ इति। एवं च यदि वेदान्तानामखण्डजीवस्वरूपपरत्वे मानान्तरासिद्धजीवरूपानुवादमात्रपर्यवसायित्वेन प्रामाण्यानिर्वाहस्तदा तन्निर्वाहाय तेषामुपक्रमादिस्वारस्यावगतमपि तद्विषयत्वं परित्यज्य मानान्तरानधिगतसगुणब्रह्मविषयतैव पूर्वपक्षिणाऽप्यङ्गीकर्तव्या स्यात्। नहि सिद्धप्रामाण्यानां वेदवाक्यानामनधिगतार्थपर्यवसानविरोधी क्वचिदपि वाक्यस्वारस्यानुरोधोऽस्ति। "त्रेधा तण्डुलान्विभजेत्" "सृष्टीरुपदधाति" "कपालेषु श्रपयति" इत्यादिषु तत्तत्स्वारस्योपस्थितानप्यन्यतः प्राप्तिमतोऽर्थान्परित्यज्य लक्षणया प्रत्यक्षविध्यन्तरद्वारा कल्प्यविध्यन्तरद्वारा वाऽनधिगतार्थपर्यवसानस्याङ्गीकृतत्वात्।

टि०–निर्मूलत्वाच्च। यत्तु भामत्यां पूर्वपक्षे पूर्वतन्त्रासिद्धस्यैव वेदप्रामाण्यस्याऽऽक्षेपवत्प्रकृतेऽपीति। तत्तुच्छम्। भवन्मते ब्रह्मतर्कस्येव भामतीकृन्मते पूर्वतन्त्रस्य ब्रह्ममीमांसां प्रत्यनङ्गत्वेन वैषम्यात्। वेदार्थनिर्णायकन्यायविचारात्मकतया तन्न्यायस्य प्रकृते निरूपणेऽपि त्वन्मते ब्रह्मतर्कब्रह्ममीमांसयोरङ्गाङ्गिभावाभ्युपगमेन तत्सिद्धप्रामाण्यस्य पुनराक्षेपायोगात्। ब्रह्मतर्कस्थापितवेदप्रामाण्यस्य प्रयोजनाभावापत्तेश्च। यत्तु "उक्तरीत्या वेदप्रामाण्याक्षेपोपपत्तिः। अद्वैतिमते वेदान्तानामनधिगतविषयत्वं शक्रेणापि समर्थयितुमशक्यम्। अत एवाभेदावलम्बनेन पूर्वपक्षप्रवृत्तौ भेदावलम्बनेन सिद्धान्तो भगवत्पादैरुक्तः। तस्माद्वेदान्तानामहंधीसिद्धनिर्विशेषजीवस्वरूपप्रतिपादनपरत्वमापाद्य पूर्वपक्षप्रवृत्तौ न काऽप्यनुपपत्तिः" इति। तन्न। "तं त्वौपनिषदं पुरुषं पृच्छामि" ( बृ० ३।९।२६ ) इति श्रुत्या प्रत्यगभिन्नब्रह्मणो वेदान्तातिरिक्तप्रमाणागम्यत्वस्य वेदान्तानां तत्परत्वस्य च बादरायणोक्तन्यायमनुसृत्य शंकरभगवत्पादैरेव व्यवस्थापितत्वेन तद्ग्रन्थापरिज्ञानस्य तद्दोषत्वात्। न ह्यन्धो रूपं न पश्यतीति रूपस्यायं दोषः। अत एवाज्ञस्याभेदो न प्रतिभाति, प्रतिभाति च भेदः। किंच वेदान्तानां व्याससूत्राणां च निर्विशेषब्रह्मपरत्वमेव सर्वपुराणप्रसिद्धम्। उक्तं हि मानवपुराणे ( १८ अध्याये )—वेदस्य कर्मभागे तु वाक्यानां वेदवित्तमाः। अन्योन्यं न विरोधोऽस्ति न्यायेन परिपश्यताम्॥ १॥ न्यायो जैमिनिना प्रोक्तो व्यासशिष्येण धीमता। प्रसादादेव रुद्रस्य द्विजाः सूत्रात्मनैव तु॥ २॥ ज्ञानभागे तु वेदस्य वेदान्ताख्ये तथैव च। वाक्यानां न विरोधोऽस्ति न्यायेन परिपश्यताम्॥ ३॥ न्यायः सूत्रात्मना प्रोक्तः सर्वज्ञेन महात्मना। व्यासेनैव प्रसादेन शिवस्य परमात्मनः॥४॥ विरोधो ज्ञानकाण्डेन

साक्षी जीवः सुखादीन्यनिशमनुभवन्सर्वमानाधिकस्ते
तेषां तर्के त्वदिष्टो बलवदबलतासंविभागश्च सिद्धः ।
तस्यात्यन्तानुकूलं श्रवणमपि तव प्राग्विचारादपेक्षं
श्रुत्यन्तानां कुतः स्यादगुणविषयतापूर्वपक्षस्य लाभः ॥६॥

व्या०—विश्वजित्स्वर्गकामाधिकरणपूर्वपक्षयोरपि नानधिगतार्थस्वरूपप्रामाण्यत्यागः। किंतु फलाभावादनुष्ठानाभावमात्रम् । उक्तं हि तन्त्ररत्ने स्वर्गकामाधिकरणपूर्वपक्षे—" नन्वेवमप्रमाणं स्यात् । न, गम्यमाने प्रवर्तनामात्रे प्रमाणमेव । न हि पुरुषप्रवृत्त्यधीनं वेदप्रामाण्यं, यदि हि तथा स्यात्, ततः प्रमाणभूतवचनविहितस्यानुष्ठानं तदनुष्ठानायत्तं च प्रामाण्यमितीतरेतराश्रयापातः " इति । तस्मात् त्वन्मते पूर्वपक्षिणा वेदान्तानां ब्रह्मतर्कसिद्धप्रामाण्याविघाताय निर्विशेषजीवविषयत्वेऽपि वाऽनधिगतविषयत्वमद्वैतिवत्समर्थनीयम् । तद्विलक्षणसगुणब्रह्मविषयत्वं वाऽङ्गीकरणीयमित्युभयथा न निर्विषयत्वशङ्कावकाश इति भावः ॥५॥

परमते मतान्तरसिद्धोपक्रमादिन्यायजालमवलम्ब्य पूर्वपक्षप्रवर्तनमपि न युक्तमित्याह—साक्षीति। एवं हि तव मतं " सुखादिकं साक्षिवेद्यम् । साक्षी च सर्वप्रमाणाधिकः । नित्यत्वेनाप्रामाण्यहेतुदोषजन्यत्वाभावात् । साक्षिविषये सुखदुःखेच्छाद्वेषादौ कदाऽपि संशयविपर्ययोरदर्शनात् । दूरसंजातजलादिज्ञानप्रामाण्यपरीक्षाधारायास्ततो जलावगाहनादिप्रयुक्तसुखादिग्राहकं साक्षिणमासाद्यैव विश्रान्तेश्च। अतः साक्ष्यनुभवविरुद्धेऽर्थे श्रुतिरपि न प्रमाणमिति "। इदं च साक्षिणो बलवत्त्वं तव प्रमाणमीमांसारूपे ब्रह्मतर्क एव प्रसिद्धम्। अतोऽत्र साक्ष्यनुभवविरुद्धं वेदान्तानां सुखदुःखादिबन्धरहितनिर्विशेषजीवस्वरूपपरत्वमात्रमपेक्ष्य पूर्व-

टि०—कर्मकाण्डस्य नैव हि.। इत्युक्त्वा द्वित्रश्लोकानन्तरम् " अखण्डैकरसार्थे तु वेदान्ता सकला भृशम् । पर्यवस्यन्ति नान्यत्र तथा व्यासेन कीर्तितम् ॥ १ ॥ संसर्गार्थे द्विजा वेदाः समस्ता आस्तिकोत्तमाः । पर्यवस्यन्ति तु यथा तथा जैमिनिनेरितम् ॥२॥ इत्युक्तम् । अत्र " व्यासोक्तवेदान्तार्थोऽखण्डैकरसः । जैमिन्यभिमतः कर्मकाण्डार्थः कर्मसंसर्गरूपः । तत्प्रवर्तकः शिवः " इत्युक्त्या वेदार्थप्रवर्तकपरमाचार्यशिवावतारशंकरभगवत्कृतसूत्रभाष्यमेव व्याससंमतं न तु कर्मसंसर्गपरकर्मकाण्डस्यापि स्वार्थं प्रच्याव्य स्वकपोलकल्पितविष्णुपरत्वप्रतिपादकं भाष्यमिति सुधीभिः सम्यग्विमर्शनीयम् । तस्माद्वेदान्तानां ब्रह्मात्मविषयत्वे शास्त्रस्य तदविषयत्वपूर्वपक्षोऽतीव हेयः ॥ ४ ॥ ५ ॥

१ निर्विशेषजीवस्वरूपेति—प्रत्यक्षं तावत्साक्षिरूपं तव मते श्रुत्यपेक्षयाऽपि प्रबलम् । तेन निर्विशेषो जीवो न गृह्यते । किंतु सविशेषः । कथं तदविषयनिर्विशेषजीवपरत्वं

व्या०-पक्षप्रवर्तनं न युज्यते। अपि च सर्वेषामपि प्रमाणानां त्वदिष्टो बलाबलविभागस्तव ब्रह्मतर्क एव सिद्धः। अतो वाक्यार्थनिर्णयप्रमाणभूतानामुपक्रमादीनामुपक्रमादुपसंहारो बलीयानित्यादिरूपस्त्वदिष्टो मतान्तरविलक्षणो बलाबलविभागोऽपि तत्रैव प्रसिद्धः। "उपक्रमादिलिङ्गानां बलीयो ह्युत्तरोत्तरम्। श्रुत्यादौ पूर्वपूर्वं च ब्रह्मतर्कविनिश्चयात्" इत्यनुव्याख्यानोक्तेः। तदभिमतोपक्रमबलाबलानुसारी सर्ववेदान्तानामर्थश्च त्वन्मते विचारात्प्रागेव गुरुमुखादवगन्तव्यः। यावच्छक्तिसकलवेदाध्ययनपूर्वकं प्रतिवाक्यमस्यायमर्थ इति सर्वेषां वेदवाक्यानां गुरुमुखादर्थग्रहणं श्रवणम्। तच्च यावदज्ञाननिवृत्त्येकस्मादेव गुरोर्वा तत्तदुत्तमगुर्वलाभे बहुभ्यो गुरुभ्यो वा सम्यगावर्तनीयम्। एवं श्रवणावृत्तिलब्धस्य वाक्यार्थग्रहणस्य स्थिरीकरणार्थं न्यायविचारात्मकं युक्त्यनुसंधानं मननम्। न तदेव श्रवणम्। ततश्च विचारशास्त्रं मननविधिमूलमिति तव मर्यादा। तथा च निर्विशेषनिष्प्रपञ्चजीवाभेदादिपरवाक्यमपि सगुणसप्रपञ्चजीवभिन्नस्वाभिमत-

टि०-श्रुतीनां वक्तुं शक्यते, प्रत्यक्षविरोधादिति भावः। एतेन "सर्ववेदानां साक्ष्यनुभवसिद्धसुखदुःखाद्यतिरिक्तविशेषशून्यजीवपरत्वापादनेनैव पूर्वपक्षप्रवृत्तिः। आकरेष्वेवमेव निर्विशेषशब्दार्थस्याभ्युपगन्तव्यत्वात्। न चैवं "अद्वैतिमतरीत्या" इति चन्द्रिकोक्तिविरोधः। वेदान्तानामहंधीसिद्धप्रत्यगात्ममात्रपरत्वाश्रयणेनापि तद्रीत्यङ्गीकारोपपत्तेः। सर्वांशेनापि तद्रीत्यनभ्युपगमाच्च" इति निरस्तम्। निर्घटं भूतलमित्यादौ घटसामान्याभाववद्भूतलमिति बोधस्येव निर्विशेषो जीव इत्यत्रापि विशेषसामान्याभाववज्जीवस्यैव स्वरसतः प्रतीतेः। उक्तरीत्या संकोचं प्रकल्प्य पूर्वपक्षप्रवर्तनायोगात्। अभ्युपगन्तव्यत्वादित्यनेन त्वदुक्तार्थस्य निर्मूलत्वप्रतीतेश्च। चन्द्रिकोक्तिविरोधस्त्वपरिहार्य एव। किंचाद्वैतिभिर्नाहंधीसिद्धप्रत्यगात्मपरत्वं वेदान्तानामङ्गी क्रियते। अपि तु तदविषयब्रह्मात्मपरत्वम्। तदनभ्युपगमे चन्द्रिकायामद्वैतिमतरीत्येत्युक्तिर्व्यर्था स्यात्।

१ प्रमाणानामिति—मध्वमते प्रमाणं त्रिविधं, प्रत्यक्षमनुमानं शब्दश्चेति। तत्र सर्वापेक्षया ज्येष्ठत्वादुपजीव्यत्वाच्च प्रत्यक्षस्यैव प्राबल्यमिति ब्रह्मतर्कनिर्णयः। इति।

२ श्रवणमिति—पदार्थज्ञानकाले न्यायानुसंधानानपेक्षणेऽपि तत्तद्वाक्यार्थज्ञानकाले तदपेक्षितमेव। अन्यथा वाक्यार्थग्रहणस्य निर्विचिकित्सस्याज्ञाननिवृत्तिक्षमस्यानुदयेन मननापेक्षा न स्यात्। मननं हि तद्दृढीकरणायापेक्ष्यते। अज्ञाननिवृत्तिस्तूत्पन्नेन निश्चयात्मकज्ञानेनैव। संशयस्य तदज्ञानजन्यस्याज्ञानानिवर्तकत्वादिति भावः। एतेन "श्रवणस्य बहुधाऽऽवृत्तत्वेऽपि श्रवणकाले न्यायानुसंधानाभावे निर्विचिकित्सज्ञानानुदयेऽज्ञानमात्रविरोधिज्ञानोदये च संशयस्यावर्जनीयतया तद्विधूननार्थं मननरूपविचारे प्रवृत्तिरुपपद्यते। न्यायं विना शतवारमुपदिष्टेऽपि संशयदर्शनात्। श्रवणात्पूर्वं धर्मिज्ञानाभावेन संशयानुदये संशयधर्मिज्ञानरूपस्य श्रवणस्याज्ञानमात्रविरोधित्वावश्यंभावाच्च" इति निरस्तम्। साङ्गाध्यय-

श्रुत्यन्तानामखण्डो विषय इति च ते केन बोद्धव्यमेत-
न्न्यायैस्तादर्थ्यमेषां घटयदतिदृढैः शास्त्रमेकं न चेत्स्यात् ।
तच्चेदङ्गी क्रियेत प्रतिहतविभिदप्रत्यगात्मैकनिष्ठं
कस्यानारम्भसिद्ध्यै प्रभवति भवतः पूर्वपक्षप्रयासः ॥ ७ ॥

व्या०—ब्रह्मपरमेव बोधयतां स्वाप्तानां गुरूणां सकाशाद्बहुधावर्तितश्रवणलब्धसकलवाक्यार्थावधारणस्तदनुगुणप्रमाणस्वरूपतद्बलाबलव्यवस्थापकब्रह्मविचारशास्त्रेतिकर्तव्यतातर्कशास्त्राभ्यासेन लब्धश्रवणसंवादस्तदनन्तरं तदर्थमननात्मके विचारे प्रवर्तमानः शिष्यः प्रत्यक्षादेस्तर्कशास्त्राभ्यासलब्धप्रमाणबलाबलस्याप्यनुगुणमनेकाप्तोपादिष्टं तं तमर्थं परित्यज्य सर्वेषां वेदान्तवाक्यानां निर्विशेषजीवचिन्मात्रमेवार्थ इति सर्वविरुद्धमर्थं कथमाशङ्केत । तथा शङ्काभावे च कथं पूर्वपक्षोदयः शिष्यस्य प्रागवगतार्थेन प्रतिबद्धुमशक्यतयोदेतुं योग्याऽऽशङ्कैव हि वादकथारूपे शास्त्रे पूर्वपक्षो नाम । अतोऽत्र शिष्यस्य प्राङ्निर्वृत्तेन श्रवणेनाङ्गविद्याभ्यासेन च प्रतिबद्धुं शक्याऽऽशङ्का नोदेतुमर्हतीति तव मते नैवं पूर्वपक्षावकाशोऽस्तीति भावः ॥ ६ ॥

एवं परमर्यादया पूर्वपक्षस्य निरवकाशत्वमुक्तं हेत्वन्तरेणापि तदाह—श्रुत्यन्तानामिति। सर्वेषां वेदान्तानां निर्विशेषजीवस्वरूपं प्रबलन्यायैः प्रतिष्ठापयच्छास्त्रमिष्यते न वा । न चेत् , प्रत्यक्षादिविरुद्धं सविशेषत्वादिविषयानेकावान्तरानेकवाक्यकृतान्तःकलहधीप्रतिरुद्धं च तेषां तत्परत्वं न सिध्यतीति तत्सिद्धिसापेक्षानारम्भपूर्वपक्षोत्थानं न स्यात् । इष्यते चेत्तदारम्भमपेक्ष्य विषयाभावेन तदनारम्भः समर्थ्य इति [1]व्याघातः स्यादित्यर्थः ॥ ७ ॥

टि०—नकाल एवाऽऽपातधर्मिज्ञानस्य निष्पन्नत्वेन त्वदभ्युपगतश्रवणस्याकिंचित्करत्वात् । यत्तु "साङ्गाध्ययनेनापि तत्तद्वेदैः पदवर्णस्वरादिना ब्रह्मापातप्रतीत्यनुदयेन तदर्थमस्मदभिमतस्य श्रवणस्याऽऽवश्यकत्वम् । श्रवणेऽपि न्यायप्रवेशे मननवैयर्थ्यं चेति" तन्निर्मूलम्। साङ्गाध्ययनेनाऽऽपातज्ञानाभावे तन्मूलस्य वैराग्यस्यानुदयेन श्रवणाय गुरूपसदनानुपपत्तेः । श्रवणस्य वेदान्ततात्पर्यनिर्णयद्वारा प्रमाणासंभवशङ्कानिवृत्तिफलकत्वात् । मननस्य च प्रमेयासंभावनानिवृत्तिफलकत्वाच्च । तस्मात्प्रत्यक्षविरुद्धेऽर्थे श्रुतीनां प्रामाण्याभावेन पूर्वपक्षानुत्थितिरिति यत्किंचिदेतत् ॥ ६ ॥

१ व्याघात इति—शास्त्रानारम्भे श्रुतीनां परस्परविरुद्धानां निर्विशेषजीवविषयत्वासिद्धिः । तदारम्भे च तत्प्रतिपाद्यं विषयं पुरस्कृत्य पुनर्विषयाभावेन तदनारम्भपूर्वपक्षो व्याहत इति भावः । न च "अयमात्मा ब्रह्म" ( मां० २ ) "केवलो निर्गुणश्च" ( श्वे० ६।११ ) इत्यादिवाक्यजन्यप्रतीतिमात्रावलम्बनेनायं पूर्वपक्षो नतु तत्परत्वप्रतिपादनपरन्यायो-

सिद्धेऽसिद्धे च सिद्धान्त्यभिमतविषये दूषणं चेत्क्रियेत
न्यायापेक्षा न तस्योन्मिषति निजमतप्रक्रियार्थानुवादे ।
सिद्धान्त्यस्वीकृतेऽर्थे यदि तु विषयतापादनं पूर्वपक्षे
कर्तव्यं तर्ह्युपायः कथमिव सुधिया तत्र नापेक्षणीयः ॥ ८॥

व्या०—नन्वेवं सति वाचस्पतिविवरणकाराभिमतयोरप्याद्याधिकरणपूर्वपक्षयोर्व्याघातः स्यात् । वाचस्पतिमते हि प्रत्यगात्मन एव ब्रह्मत्वात्तस्य चाहमिति प्रकाशमानत्वाल्लोकसिद्धस्य तस्य विचारार्थं शास्त्रं नाऽऽरम्भणीयमिति पूर्वपक्षः। न च प्रत्यगात्मन एव ब्रह्मत्वं प्रत्यग्ब्रह्मणोरैक्यं च शास्त्रेण विना सिध्यति । येन व्याघातो न स्यादित्याशङ्क्याऽऽह—सिद्ध इति । तत्र प्रत्यगात्मन एव ब्रह्मतया विषयत्वं प्रत्यग्ब्रह्मणोरैक्यस्य विषयत्वं च सिद्धान्त्यभिमतमेवानूद्य तयोरेकस्य सिद्धत्वेनान्यस्यासिद्धत्वेन च विषयत्वासंभव इति तौ पूर्वपक्षौ प्रवृत्तौ । तत्र कुतः प्रत्यगात्मैव ब्रह्मेति वा कुतः प्रत्यग्ब्रह्मणोरैक्यमिति वा पूर्वपक्षिणं प्रति सिद्धान्तिनो हेत्वाकाङ्क्षा न भवति । सिद्धान्त्यमभिमतस्यैव तयोर्विषयत्वस्य पूर्वपक्षेऽनूदितत्वात् । ततस्तत्र विषयोपपादकशास्त्रारम्भमनपेक्ष्य तदनारम्भपूर्वपक्षप्रवृत्तेर्न व्याघातः । त्वन्मते तु निर्विशेषजीवचिन्मात्रं ब्रह्मेति सिद्धान्त्यनभिमत एवार्थे विषयत्वमापाद्य पूर्वपक्षप्रवृत्तेरिति तस्मिन्नर्थे सिद्धान्तिनो हेत्वाकाङ्क्षोदयेन तदुपपादकशास्त्रारम्भस्य त्वत्पूर्वपक्षिणोऽपेक्षितत्वाद्व्याघात एवेति भावः ॥ ८ ॥

ननु सिद्धान्त्यनभिमतमर्थं पुरस्कृत्य शास्त्रानारम्भपूर्वपक्षे तदुपपादनाय शास्त्रारम्भोऽपेक्षित एवेति व्याघातश्चेत्, पूर्वमीमांसाद्याधिकरणपूर्वपक्षेऽपि व्याघातः स्यात्। स खल्वेवं प्रवृत्तः, अध्ययनविधिना विश्वजिन्न्यायाद्वेदाध्ययनस्य स्वर्गार्थताबोधकेनार्थज्ञानेतरफलार्थत्वं नीयमानानां वेदानां विषनिर्हरणादिमन्त्राणामिवार्थविवक्षाग्राहकं प्रमाणं नास्तीति वेदवाक्यान्यापाततोऽपरिपूर्णानुपपन्नार्थानि लक्षणानुषङ्गाध्याहारव्यवधारणादिकल्पनार्थिकार्थकल्पनादिभिरवश्यमुपपादनीयानी-

टि०—पेतवाक्यजन्यज्ञानावलम्बनेनेति वाच्यम् । “ज्ञाज्ञौ द्वावजावीशानीशौ” (श्वे० १।९) “यः सर्वज्ञः सर्ववित्” (मु० १।९) इत्यादिभेदसविशेषवाक्यानामपि सत्त्वेन प्रबलतरन्यायाभावे संशयस्यैवोत्पत्तेः । पूर्वपक्षोऽपि निर्णयरूपः । तस्य च संशयोत्तरस्य न्यायसाध्यत्वात् । अत्रायं विशेषः । भ्रमरूपनिश्चयः पूर्वपक्षः । सिद्धान्तस्तु प्रमारूप इति ॥ ७ ॥

१ सिद्धेऽसिद्धे चेति । सिद्धेऽसिद्धेति पदच्छेदः ।

२ प्रत्यग्ब्रह्मणोरैक्यस्येति। सूत्रस्थब्रह्मशब्देन जीवो न विचार्यत्वेन विवक्षितः । तस्य दुःखित्वात् । नापि सगुणं ब्रह्म । तस्यापि परिच्छिन्नत्वेनान्तवत्त्वात् । मुमुक्ष्वनपेक्षितत्वाच्च । किंतु त्रिविधपरिच्छेदशून्यमत एव प्रत्यगभिन्नस्वरूपमेव विवक्षितमिति भावः ॥ ८ ॥

एकं वाक्यं विचार्यं यदि भवति नयो वाऽपि सर्वत्र तुल्य-
स्तत्किंचिन्न्यायक्लृप्त्याऽनभिमतरचना युज्यते पूर्वपक्षे ।
सर्वेषामेव नानाविधनयनिकरानेयतात्पर्यसीम्नां
वेदान्तानां विमर्शाद्विषयविरचना त्वेकमीहेत शास्त्रम् ॥ ९ ॥

---

व्या०—"यत्र नियामकाभावादनुपपत्तिशङ्काकलङ्कितवेदार्थविचारात्मकं शास्त्रं नाऽऽरम्भणीयमिति"। तत्रापि स्वाध्यायाध्ययनस्य स्वर्गार्थत्वं सिद्धान्त्यनभिमतमेव पूर्वपक्षिणोपपादनीयमिति तदुपपादकविश्वजिन्न्यायादिप्रतिपादकशास्त्रारम्भापेक्षेत्याशङ्क्याऽऽह—एकमिति ।

धर्मजिज्ञासासूत्रे ( जै० सू० १।१।१ ) अध्ययनवाक्यमेकमेव विचार्यम् । तस्य सिद्धान्त्यभिमतदृष्टफलरूपार्थज्ञानार्थत्वे वैयर्थ्यप्रसङ्गात्सर्वापेक्षितस्वर्गार्थत्वं वाच्यमिति शक्यं पूर्वपक्ष एव किंचिन्न्यायोपपादनमिति तदर्थं न शास्त्रारम्भापेक्षा । अध्ययनविधिद्वारा तदुपात्तानां सर्वेषामपि वेदवाक्यानां विचार्यत्वेऽपि तेषामविवक्षितार्थत्वे पूर्वपक्षिणोपपादनीये विषनिर्हरणादिमन्त्रवदन्यार्थत्वनीयमानत्वमेक एव न्यायः । सोऽपि पूर्वपक्ष एवोपपादयितुं शक्य इति तदर्थमपि न शास्त्रारम्भापेक्षा । न हि कियन्तमपि न्यायमप्रदर्श्य पूर्वपक्षः क्रियते । इह तु त्वन्मते नैकमेव वेदवाक्यं विषयः । तस्यैकस्य केनचिन्न्यायेन पूर्वपक्ष एव व्युत्पादितेन निर्विशेषचिन्मात्रपरत्वसिद्धावपि वाक्यान्तराणां सगुणब्रह्मपरत्वानिवारणेन तद्विचारार्थं शास्त्रस्याऽऽरम्भप्रसङ्गात् । ततः पूर्वपक्षिणा सर्वेषामेव वेदान्तानां निर्विशेषचिन्मात्रपरत्वव्यवस्थापनेन सिद्धान्त्यभिमते सगुणे ब्रह्मणि प्रमाणाभावात्तद्विचारार्थमपि शास्त्रं नाऽऽरम्भणीयमिति च वाच्यं त्वदभिमतं च । न च त्वन्मते सर्वेषां वेदान्तानां निर्विशेषजीवाचिन्मात्रपरत्वे सार्वत्रिक एको न्यायोऽस्ति । उपक्रमादीनां श्रुतिलिङ्गादीनां च परःशतं बाध्यबाधकभावप्रकारशालिनां तत्र तत्र व्यवस्थापितत्वात् । न च तेषां सर्वेषामेकस्मिन्नेवात्र पूर्वपक्षे व्युत्पादनं युक्तम् । तथा सति शास्त्रस्यैकाधिकरण्यकल्पनाप्रसङ्गात् । तस्मात्तावतां न्यायानां व्युत्पादकमेकं शास्त्रमिहैवापेक्षितमित्यत्रैव व्याघातो न धर्ममीमांसापूर्वपक्ष इति भावः ।

एतेन वाचस्पतिपूर्वपक्षे प्रत्यगात्मन इदानीमहमिति प्रकाशमानं रूपमध्यासपरिनिष्पन्नं तदिह न विचार्यं, किंतु संसारदशायामनाविर्भूतं निर्विशेषं तस्य तात्त्विकं रूपमस्ति श्रुतिप्रसिद्धम् । तद्विचारार्थं शास्त्रमारम्भणीयमिति शङ्कावारणाय, विवरणकारपूर्वपक्षे प्रत्यग्ब्रह्मैक्यं सिद्धं तत्साधकश्रुतिसद्भावादिति शङ्कावारणाय च बहूनां निर्विशेषवाक्यानामभेदवाक्यानां चान्यपरत्वं

तच्छास्त्रं चेदितोऽन्यत्कणचरमतवत्कल्प्यते पूर्वसिद्धं
जीवं तस्य स्वसिद्धं विषयमुपयतो हन्त तेऽस्यैव सोऽस्तु ।
तेनैकार्थ्ये विरोधेऽप्यपहतविषयं शङ्क्यते चेदिहेदं
जीवासंदिग्धतोक्तिः कथमिव घटनी पूर्वपक्षस्य ते स्यात् ॥१०॥

---

व्या०—वक्तव्यमिति तदुपपादकशास्त्रारम्भापेक्षया व्याघातः स्यात्" इत्यपि शङ्का निरस्ता । एकयैव प्रत्यक्षादिविरोधयुक्त्या तेषामन्यपरत्वकल्पनादिति ॥ ९ ॥

स्यादेतत्, अस्त्येव शारीरकशास्त्रादस्मादन्यत्सर्ववेदान्तानां निर्विशेषपरत्वव्युत्पादकं शास्त्रम् । तदवलोकनेनैवं पूर्वपक्षः स्यादित्याशङ्क्याऽऽह—तच्छास्त्रमिति ।

तस्य शास्त्रस्य स्वप्रकाशोऽपि जीवो विषयः[1] स्वी क्रियते चेदस्यैव शास्त्रस्य स विषयोऽस्तु, किमप्रसिद्धशास्त्रान्तरकल्पनया । तत्कल्पनया पूर्वपक्षसमर्थनेऽपि स्वप्रकाशस्य विषयत्वासंभवयुक्तेर्व्याहतत्वापरिहारात् । नन्वत्र स्वप्रकाशस्य विषयत्वासंभवयुक्त्याऽनारभ्य इति न पूर्वपक्षः । किंतु वेदान्तानां स्वप्रकाशचिन्मात्रपरत्वव्यवस्थापकं तावच्छास्त्रमस्ति, इदमपि तथाभूतं चेत्तेन गतार्थमतः सगुणब्रह्मपरत्वव्यवस्थापकं चेत्तेन बाधितार्थमित्युभयथाऽपि तदुपहतविषयत्वादनारभ्यमिदं शास्त्रमिति । अतो न व्याघात इति चेत्, एवं तर्हि जीवस्य स्वप्रकाशत्वेनासंदिग्धत्वोक्तिः[2] पूर्वपक्षेऽनुपयुक्ता । तद्विरुद्धा च स्यात्तदेव हि

---

टि०— १ विषय इति । तच्छास्त्रफलनिर्धारणविषय इत्यर्थः । तस्य सर्ववेदान्तानां निर्विशेषजीवपरत्वव्युत्पादकशास्त्रप्रतिपाद्यत्वौचित्यात् । एतेन "श्रुतितन्मीमांसारूपशास्त्रयोः स्वप्रकाशाखण्डजीवस्वरूपपरत्वप्रतिपादकशास्त्रान्तरस्य स्वप्रकाशजीवविषयकत्वनिर्धारणफलकत्वं नाभ्युपगम्यते । तयोः स्वप्रकाशाखण्डजीवस्वरूपपरत्वस्यैव तन्निर्धारणीयत्वाभ्युपगमात् । न च तस्यैव ब्रह्ममीमांसाशास्त्रस्यापि तदेव विषयो न तु स्वप्रकाशजीव इति युक्तं सिद्धान्तिना तथाऽनभ्युपगमात् । वेदान्तानामनुवादकत्वापरिहाराच्च । तस्मादाक्षेप्याक्षेपकशास्त्रयोर्भिन्नविषयत्वेन न व्याहतिदोषप्रसरः" इति निरस्तम् । तयोः स्वप्रकाशाखण्डजीवस्वरूपपरत्वप्रतिपादकशास्त्रस्य तद्विषयत्वनिर्धारणफलोत्पादनाय प्रवृत्तस्य तत्फलकत्वाभावे तत्परत्वासंभवेन तस्य व्यर्थत्वापत्तेः । तस्य भिन्नविषयकत्व आक्षेप्याक्षेपकत्वासंभवाच्च । वेदान्तानां स्वमनीषयाऽनुवादकत्वकल्पनायोगात् । त्वत्सिद्धान्ते च वेदशास्त्रयोः सगुणपरत्वेनानुवादकत्वं कुतो नेति पृष्टो व्याचष्टां देवानांप्रियः ।

२ असंदिग्धत्वोक्तिरिति । न चाव्यवहितपक्ष एव सा, तत्र तादृशोक्तेर्विरोधादिति वाच्यम् । अत्र व्यवहिताव्यवहितपक्ष इति स्वकल्पनामात्रत्वेन तस्य मूलग्रन्थास्पर्शित्वात् । "न तावद्ब्रह्म विषयः । असंदिग्धत्वात् । प्रमाणाभावेन जीवव्यतिरिक्तस्य

व्या०—त्वया पूर्वपक्षसमर्थनार्थमुक्तम् । कणभुगादिशास्त्रेणाप्यपहतविषयतयाऽनारम्भे शङ्कितुं शक्येऽपि निर्विशेषशास्त्र एव तव पक्षपातश्च कथम् । समयपादे तत्सर्वं निराकर्तव्यमिति चेदिदमपि तथाऽनभिमतं शास्त्रान्तरमस्ति चेत्तत्रैव निराकर्तव्यं

टि०—ब्रह्मणोऽभावात् ” इत्येव तत्त्वप्रकाशिकायामुक्तत्वात् । समयपादे तादृशशास्त्रस्यानुवाद-खण्डनयोरकरणेन तथाविधशास्त्रान्तरमभ्युपगम्य पूर्वपक्षप्रवृत्तेः सूत्रकारासंमतत्वाच्च । एतेन “ एतच्छङ्काया अशोकवनिकान्यायत्वम् ” इत्यपास्तम् । तस्य वल्प्तविषयत्वात् । अविद्यावृतानन्दादीनां जीवे विद्यमानत्वेन तद्विचाराय शास्त्रारम्भावश्यकत्वेनानारम्भपूर्वपक्षा-नुत्थानाच्च । यत्तु “ न तावत्त्वन्मत इवास्मन्मते जीवानन्दावरणानुपपत्तिः । जीवतदानन्दयो-रभेदेऽपि गुणगुणिभावनिर्वाहकस्य भेदप्रतिनिधेर्विशेषस्य सत्त्वेन जीवस्वरूपानावरणेऽपि तदा-नन्दावरणोपपत्तेः । नहि विशेषस्य जीवस्वरूपत्वेन तेन कथं तदप्रकाशोपपादनमिति युक्तम् । भेदकार्यनिर्वाहकत्वेनाऽऽगच्छतस्तस्य जीवस्वरूपत्वकल्पनस्यानवस्थितिभिया पश्चाद्भावित्वेन कथंतानवकाशात् । धर्मिग्राहकमानेन तस्य तादूप्येणैव सिद्धत्वाभ्युपगमात् । न च त्वदभिमतवि-शेषस्य निर्विशेषाखण्डब्रह्मवादाविरोधितया तत्पक्षेऽप्यावरणं युक्तमिति वाच्यम् । तथाऽभ्युपगमे विवादपर्यवसानात् । परेणाविद्याया एवाऽऽवारकत्वाभ्युपगमाच्च । न चाविद्याऽपि तदावरणं, त्वया ज्ञानाज्ञानयोर्विरोधाभ्युपगमादविद्यायाः स्वप्रकाशब्रह्मावरणे च न कदाऽपि तन्निवृत्तिः स्यात । यथाऽऽहुः “ज्ञानरूपं परं ब्रह्म तन्निवर्त्यं मृषात्मकम् । अज्ञानं चेत्तिरस्कुर्यात्कः प्रभुस्तन्निवर्तने” इति । तन्न । विशेषेणाऽऽनन्दावरणे तदभिन्नजीवस्वरूपस्याप्यावृतत्वेन तस्य संदिग्धत्वोक्ते-र्मोहमूलत्वात् । जीवतद्धर्मानन्दयोर्भेदप्रतिनिधिविशेषासिद्धौ जीवानन्दस्याऽऽवरणमानन्द-मात्रस्याऽऽवरणासिद्धौ तादृशविशेषसिद्धिरित्यन्योन्याश्रयात् । अनवस्थाभिया जीवस्वरूपत्वेन कल्पितस्य विशेषस्य जीवानन्दानावारकत्वाच्च । किंचाविद्याऽपि त्वन्मते तदावारिका । “ पुंस्त्वादिवत् ” (ब्र० सू० २।३।३१)। इति सूत्रे भावरूपायास्तस्यास्तत्त्वप्रकाशिका-यामभ्युपगमात् । तथैव सर्वनिर्वाहे भेदप्रतिनिधेर्विशेषस्य वैयर्थ्याच्च । मन्मते ज्ञानाज्ञानयो-र्विरोधेऽपि स्वरूपज्ञानस्याज्ञानसाधकत्वेन तदावृतत्वेऽपि चैतन्येद्धवृत्तेर्ब्रह्ममात्रविषयिण्या-स्तन्निवर्तकत्वम् । “ मायामेतां तरन्ति ते ” ( गी० ७।१४ ) इत्यादिस्मृतिसिद्धं च । विशे-ष्यमात्रविषयकाज्ञानं न विशिष्टविषयकज्ञाननिवर्त्यम् । भिन्नविषयकत्वात् । एतेन “ विशिष्ट-विषयकज्ञानेन विशेष्याज्ञाननिवृत्तिरवश्यमभ्युपगन्तव्या । अन्यथा दण्डी पुरुष इति ज्ञानेन देवदत्ताज्ञानानिवृत्तिप्रसङ्गात् ” इति निरस्तम् । दण्डिपुरुषत्वस्य यज्ञदत्तादिसाधारण्येन देवदत्तविषयकाज्ञाननिवर्तकतानवच्छेदकतयाऽऽपादनस्येष्टत्वात् । ननु मन्मते जीवस्य स्वानन्देश्वरतद्गुणाद्यावरकमज्ञानं युक्तं न तु त्वन्मते, “ तुरीयं सर्वदृक् सदा ” (गौ० का० १।१२) “ यः सर्वज्ञः सर्ववित् ” ( मु० १।९ ) इत्यादिश्रुत्या ब्रह्मणः सदा सर्वविषयका-परोक्षवत्त्वावेदनेन तस्य स्वं प्रति स्वरूपाद्यावरकाज्ञानायोगात् । तदुक्तं भगवत्पादैः—“ पुंग-तमेव हि तम इति ” । “ अज्ञताऽखिलसंवेत्तुर्घटते न कुतश्चन ” इति । तस्मान्निर्विशेषाभे-

का चात्रानुपपत्तिर्जीवस्य स्वप्रभस्य विषयत्वे ।
आविद्यकमावरणं जानीषे चानुमन्यसे च त्वम् ॥ ११ ॥

पुंस्त्वादिवत्त्विति नये पुरुषस्य हि त्व-
मानन्दमावृतमभिन्नमुपेत्य नित्यम् ।

---

व्या०—स्यात्। अनभिमततन्त्राणां सर्वेषामपि स्वातन्त्र्येण पृथक्पृथक् तत्रैव निराकरणात्। तस्मादनिराकरणादवसीयत इदमेव तच्छास्त्रं नान्यदिति ॥ १० ॥

नन्वेतावताऽपि स्वप्रकाशस्य विषयत्वानुपपत्तिरसमाहितैवेत्याशङ्क्यां परस्यापि संमतेनाविद्यावरणेन जीवस्यानधिगतत्वमुपपादयन्परिहरति—केति ।

ननु भावरूपाज्ञानं नानुभवामः। न चानुमन्यामहे। न जानामीत्यनुभवस्य ज्ञानाभावविषयत्वसमर्थनादित्याशङ्क्याऽऽह—पुंस्त्वादिवदिति । एवं हि तव मतं "नित्यानन्दस्वरूप एव सन्मुक्तियोग्यो जीवः। न तस्य मुक्तावागन्तुकोऽस्त्यानन्दः। विकाररूपाणां धर्माणां मुक्तावभावात्। न च तदानीं पुरुषार्थरूपस्याऽऽनन्दस्य संसारदशायां सत्त्वे मुक्तिसंसारयोरविशेषप्रसङ्गः। तस्येदानीमावृतत्वाभ्युपगमात्। न चानादि भावरूपमज्ञानं तदावरकं सिद्धान्ते नेष्यते। सादिना तु कामकर्मादिना न निर्वाहः। सुषुप्तिप्रलययोस्तद्वृत्त्यभावेन मुक्ताविवाऽऽनन्दस्फूर्तिप्रसङ्गादिति वाच्यम्। सिद्धान्ते सत्यस्यानादेर्जीवाश्रितस्य तं प्रति तदीयानन्दादिकं ब्रह्मस्वरूपतद्गुणगणादिकं चाऽऽवृण्वतो मायाऽविद्या प्रकृत्यादिशब्दवाच्या द्रव्यरूपस्य ज्ञानविरोधिनो भावरूपाज्ञानस्य "अनादिमायया सुप्तो यदा जीवः प्रबुध्यते" (गौ० का० १।१६) "भूयश्चान्ते विश्वमायानिवृत्तिः" (श्वे० १।१०) इत्यादिश्रुतिस्मृतिप्रतिपन्नस्येष्यमाणत्वात्। तस्य च परमेश्वरापरोक्षज्ञानेन निवृत्तौ प्राक् सत एवाऽऽनन्दस्य बाल्येऽपि सतः पुंस्त्वादेर्यौवन इव मुक्तावभिव्यक्तिः। सुषुप्त्यादौ तत्सत्त्वेऽपि कामकर्मादिवृत्त्य-

---

टि०—दपक्षे प्रकाशमानस्याप्रकाशमानत्वमयुक्तमिति चेद्भ्रान्तोऽसि। "तुरीयं सर्वदृक् सदा" (गौ० का० १।१२) इत्यस्य सर्वभानप्रयोजकदृक्स्वरूपमित्यर्थत्वात्। नहि दृक्पदं दृग्वतोऽभिधायकम्। मानाभावात्। एतेन "यः सर्वज्ञः" इत्यत्रापि श्रुत्यन्तरैकार्थ्याय घञर्थे कप्रत्यय इति वक्तव्यम्। ततश्च सर्वज्ञानरूप इत्येवार्थ इति न ज्ञानवत्त्वसिद्धिः। पुंगतस्याप्यज्ञानस्य ब्रह्मावारकत्वं युक्तम्। "अज्ञानेनाऽऽवृतं ज्ञानम्" (गी० ५।१५) इति स्मृतेः। तस्मान्निर्विशेषाभेदपक्षेऽपि स्वप्रकाशस्याप्यविद्यावरणं युक्तमेवेति शास्त्रारम्भस्याऽऽवश्यकत्वेनानारम्भपूर्वपक्षो हेय इति दिक् ॥ १० ॥

तत्त्वावबोधसमनन्तरमस्मदुक्तं
मुक्तौ तदावरणभञ्जनमन्ववादीः ॥ १२ ॥
अभेदे दृढे तत्प्रकाशाप्रकाशावविद्याभिधब्रह्मशक्त्योपपन्नौ ।
विशेषेऽपि ते जीवचैतन्यरूपं विरोद्धुं न शक्नोति तस्य प्रकाशम् ॥ १३ ॥

व्या०—भावादीषदभिव्यक्तिः। तस्यानादित्वेन स्वोपादानगतोत्तरावस्थारूपनिवृत्त्यसंभवेऽपि प्रमाणसत्त्वेन निवर्तकोपनिपातबलात्स्वरूपप्रध्वंसरूपा निवृत्तिः । तच्च प्रतिजीवं भिन्नमित्येकमुक्तौ न सर्वमुक्तिरिति ” सर्वोऽप्ययमर्थः “ पुंस्त्वादिवत्तस्य सतोऽभिव्यक्तियोगात् ” ( ब्र० सू० २।३।३१ ) इत्यधिकरणे प्रतिपाद्यत्वेन त्वदभिमतोऽस्मदीयभावरूपाज्ञानवृत्तानुवाद एव । तदनिर्वचनीयत्वादिकं किंचित् परं नेष्यते । तथा च यस्त्वया संसारदशायां प्रकाशमानस्यैव जीवस्य स्वरूपभूतानन्दस्तदानीमावृत्येष्यते स एव श्रुतीनां जीवस्वरूपपरत्वपक्षेऽनधिगतो विषय इति न तस्मिन्विषये विषयाभावसिद्धिरिति भावः ॥ १२ ॥

ननु मत्सिद्धान्ते जीवतदानन्दयोरभेदेऽपि गुणगुणिभावनिर्वाहकस्य भेदप्रतिनिधेर्विशेषस्य सत्त्वात्स्वप्रकाशस्य जीवस्य स्वरूपानावरणेऽप्यानन्दस्य युक्तमावरणम् । अखण्डपक्षे तु जीवतदानन्दयोर्विशेषाभावादयुक्तम् । तथा हि—प्रकाशमानस्यैवाऽऽनन्दस्याप्रकाशमानत्वं वाच्यम् । न च तद्युज्यते विरोधादित्याशङ्क्याऽऽह—अभेद इति । सत्यं निर्विशेषाभेदपक्षे प्रकाशमानस्यैवाप्रकाशमानत्वं वाच्यमिति । तदविद्याशक्तिमहिम्नोपपद्यते । सा ह्यघटितघटनापटीयसी ब्रह्मणः शक्तिः । तस्यास्तादृशो महिमा नेष्यते चेत्सविशेषाभेदपक्षेऽप्ययं विरोधो दुष्परिहरः । नहि विशेषोऽस्तीत्येतावताऽऽनन्दप्रकाशस्याविद्यावरणेन किंचिदपनीयते । घटस्य कुड्यावरणेन तत्संनिकर्षप्रतिबन्धवत्, घटशौक्ल्यस्य महारजनरञ्जनेन तज्ज्ञानप्रतिबन्धवच्चात्राऽऽनन्दस्य संनिकृष्टत्वप्रतिबन्धस्य तत्प्रकाशोत्पत्तिप्रतिबन्धस्य च वक्तुमशक्यत्वात् । नित्यस्य जीवचैतन्यस्य तत्प्रकाशतया तदुत्पत्तेस्तत्कारणेन्द्रियसंनिकर्षस्यानपेक्षणात् । छत्राद्यावरणेनाऽऽलोकस्य विषयसंबन्धप्रतिबन्धवज्जीवचैतन्यस्याऽऽनन्दसंबन्धप्रतिबन्धस्यापि वक्तुमशक्यत्वाच्च । तयोर्विषयविषयिभावसंबधस्याऽऽनागन्तुकस्वरूपाभिन्नधर्म-

टि०— १ त्वदभिमत इति—उक्तं च तत्त्वप्रकाशिकायाम् “ न चावरणानुपपत्तिः । ज्ञानाभावातिरिक्ततन्निमित्ताविद्याभ्युपगमात् ” इति ॥ १२ ॥

मुख्यो भेदः सन्नपि ब्रह्मदृष्टिं नेष्टे रोद्धुं तत्र को वा विशेषः।
तद्दृष्टिस्ते नित्यसिद्धो हि जीवस्तस्मादन्यन्नास्ति तद्गोचरत्वम् ॥१४॥

व्या०—त्वात्। न च मुक्तावानन्दप्रकाशो जीवभिन्नो जन्यज्ञानस्वरूप एवास्तु, जीवचैतन्यस्यैवाऽऽनन्देन विषयविषयिभावसंबन्धस्यानागन्तुकस्वरूपाभिन्नधर्मत्वात्, जीवचैतन्यस्यैव वाऽऽनन्देन विषयविषयिभावस्तदानीं जन्योऽस्तीति वाच्यम्। मुक्तावन्तःकरणविलयेन तद्वृत्तीनां जन्यज्ञानानां जीवचैतन्यधर्माणां च त्वयाऽप्यनङ्गीकृतत्वात्। न चाऽऽनन्दजीवचैतन्ययोर्विषयविषयिभावः सदा शक्त्यात्मना स्थितोऽपि मुक्तौ व्यक्तात्मतामापद्यत इति तदानीमेवाऽऽनन्दप्रकाशो न प्रागिति वाच्यम्। व्यक्तेरपि नित्यत्वानभ्युपगमे मुक्तौ जीवस्य सविकारत्वापत्तेः। नित्यानित्ययोः शक्तिव्यक्त्योर्भेदप्रसङ्गाच्चेति। "न विशेषात्मता चेयमनित्या शक्तिरूपता। सैव यत्सविशेषा स्याद्विशेषोऽन्यो न चाप्ययम्" इत्यनुव्याख्याने व्यक्तेः शक्त्यभिन्नत्वेनानित्यत्वप्रतिषेधाच्च। इदानीमप्यानन्दप्रकाशप्रयुक्तस्य स्वात्मनि परमप्रेम्णोऽनुभवाच्च। तस्मात्त्वन्मतमर्यादया लोकानुभवेन च जीवानन्दे प्रकाशमान एवाप्रकाशमानत्वं वक्तव्यम्। तच्चाविद्यामहिम्नैवोपपादनीयम्। तथैवोपपादितं च न्यायसुधायाम्। अतः परमेश्वर एव सत्त्वादिगुणमय्यविद्याविरोधित्वेनाविद्यया स्वाधीनया प्रकृत्याख्ययाऽचिन्त्याद्भुतया स्वशक्त्या जीवस्य स्वप्रकाशमपि स्वरूपचैतन्यमाच्छादयतीति युक्तमिति तत्र विशेषोऽकिंचित्कर एवेति भावः॥ १३॥

उक्तमर्थं कैमुतिकन्यायेनाप्युपपादयति—मुख्य इति। जीवस्य ब्रह्मणः सकाशान्मुख्यो भेदः सन्नपि ब्रह्मदर्शनं यदा निरोद्धुं शक्नोति तदा जीवस्य स्वानन्दाद्विशेषो भेदप्रतिनिधिस्तद्दर्शनं निरोद्धुं न शक्नोतीति किमु वक्तव्यम्। भेदोऽपि न निरोद्धुं शक्नोतीत्यत्र विशेषदर्शित एव न्यायः। स तु पूर्वश्लोके संक्षिप्त इह स्पष्टीकृतः। न चाव्यक्तस्वभावत्वाद्ब्रह्मणस्तदप्रकाशोपपत्तिरिति वाच्यम्। तथा सति ब्रह्मणः प्रकाशप्रसक्त्यभावेन जीवाश्रितमज्ञानं ब्रह्म तद्धर्मविषयमानन्दपारतन्त्र्यादिस्वधर्मविषयं चेति कल्पनावैयर्थ्यप्रसङ्गात्। उपासनानन्तरमप्यप्रकाशापातेन मोक्षशास्त्रवैयर्थ्यप्रसङ्गाच्च। न चाव्यक्तस्वभावमपि ब्रह्मोपासनया प्रसन्नं सत्स्वशक्त्यैवापरोक्षी भवति। तच्चापरोक्षज्ञानमन्तःकरणवृत्तिरूपमिति तेनैव मोक्षः। अतः स्वरूपचैतन्यस्य कदाचिदपि ब्रह्म न विषय इति वाच्यम्। त्वया "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्" (बृ० १.४.८) इत्यादिश्रुत्या

इति तव सविशेषानन्दतद्ब्रह्मवच्च
स्फुरणयुतमखण्डानन्दमप्याद्रियन्ते ।
अनधिगतमविद्याशक्तिभूम्नैव धीराः
स हि सकलमनूद्य प्रश्नतोऽपि प्रसिद्धः ॥ १५ ॥

---

व्या०—ब्रह्म परप्रेमास्पदतयोक्तमिति मुक्तौ स्वरूपानन्दानुभववत्तदनुभवस्यापि पुरुषार्थतयाऽङ्गीकृतत्वात् । मुक्तौ तु माहात्म्यग्रहणपूर्वकस्नेहरूपाया भक्तेरुपासनायाश्च त्वयाऽङ्गीकृतत्वाच्च । तस्मान्मुक्तौ स्वरूपचैतन्यातिरिक्तज्ञानाभावात्स्वरूपचैतन्यस्य च तदानीमागन्तुकविषयविषयिभावासंभवात् । अनादिकालमारभ्यैव ब्रह्मणस्तद्गुणगणस्य च मुक्तियोग्यजीवानां स्वरूपचैतन्ये प्रकाशनं वक्तव्यमेव । तथाऽङ्गीकृतं च त्वया "स्थानाविशेषात्प्रकाशादिवत्" (ब्र० सू० ३.२.३५) इत्यधिकरणे । तत्र हि चतुर्मुखादिजीवानन्दानां ब्रह्मानन्दप्रतिबिम्बत्वे बिम्बवैचित्र्याद्वैचित्र्यानुपपत्तिमाशङ्क्य तत्तज्जीवगतानादिभक्त्यादिगुणवैचित्र्यात्तदानन्दादिवैचित्र्यमुपपद्यत इत्युक्तम् । उदाहृतं च "ऐश्वर्यात्परमाद्विष्णोर्भक्त्यादीनामनादितः । ब्रह्मादीनां सूपपन्ना ह्यानन्दादेर्विचित्रता" इति । एवं 'अनुबन्धादिभ्यः' (ब्र० सू० ३.३.५१) इत्यधिकरणान्तरोक्तम् । "तथाऽप्यनादिसंसिद्धभक्त्यादिगुणपूगतः । लभेद्गुरुप्रसादं च भक्त्या एव च तद्भवेत्" इति वचनमप्युदाहर्तव्यम् । युक्तं चातीतानागतपदार्थानां तत्तत्कालानामव्याकृताकाशस्य तदंशानां प्राच्यादीनां दिशां मनसः परमाणूनां तदवयवपरम्पराणां च साक्षिप्रत्यक्षविषयत्वमातिष्ठमानस्य तव ब्रह्मणोऽपि तद्विषयत्वम् । एवं ब्रह्मणस्तद्गुणानां च प्रकाशमानत्वेऽपि त्वयाऽस्य शास्त्रस्य निर्विषयत्वपरिहारायाप्रकाशमानत्वमप्यविद्यामहिम्नोपपादनीयम् । उपपादितं च तथैव न्यायसुधायाम्-(ब्र० सू० १.१.१.) "यद्यपि जीवचैतन्यं ब्रह्मतद्धर्मप्रकाशनात्मकं तथाऽपि परमेश्वराचिन्त्याद्भुतशक्तिबृंहिताविद्यावशान्न तथा संसारे प्रकाशयति" इति । एवं परमते सविशेषाभिन्नस्य जीवानन्दस्यैवात्यन्ताभिन्नस्य ब्रह्मण इव वाऽत्यन्ताभिन्नस्याखण्डानन्दस्य प्रकाशमानस्याप्यप्रकाशमानत्वमप्यविद्यामाहिम्नोपपन्नमिति ॥ १४ ॥

उक्तार्थमुपसंहरन्नेव तत्र युक्त्यन्तरं दर्शयति—इतीति । त्वदुक्तोऽर्थः क इति न जानामि । दूरे जनमिव भासमानं किमिति न जानामि । इति शब्दतः प्रत्यक्षतश्चावगतमप्यर्थं साकल्येनानूद्य तत्रैव प्रश्नोऽज्ञानानुभवश्च दृश्यते । अतो बाह्यविषयेऽपि प्रकाशमानस्याप्रकाशमानत्वं प्रसिद्धमेव । न च

यदि त्वेवं सत्यप्यगुणविषयं नानुमनुषे
तदा शास्त्रं कामं भवतु सगुणब्रह्मविषयम् ।

व्या०—त्वदुक्तोऽर्थ इत्यादौ सामान्यतो ज्ञाते विशेषतः प्रश्नोऽज्ञानानुभवश्चेति वाच्यम् । सामान्यस्य ज्ञानस्य प्रश्नविशेषतया अज्ञानावच्छेदकतायाश्चानुपपन्नत्वात् । अज्ञातस्य विशेषस्य प्रश्नविषयतया ज्ञानावच्छेदकतया चानुवादायोगात् । न चान्वयव्यतिरेकाभ्यां विशेषप्रश्ने सामान्यज्ञानमेव तन्त्रं, विशेषाज्ञानानुभवे च सामान्यमेवावच्छेदकमिति वाच्यम् । सामान्यविशेषभावस्य व्याप्यव्यापकभावातिरिक्तस्याभावेनाज्ञातधूमकस्य विज्ञातवह्निकस्य धूमप्रश्नप्रसङ्गात् । धूमाज्ञानस्य वह्निं न जानामीति वह्न्यवच्छेदेनानुभवप्रसङ्गाच्च । अनुमितिहेतुज्ञानविषयव्याप्तिप्रश्नादिस्थले विशिष्य त्वदभिमतसकलविशेषणविशिष्टं व्याप्त्यादिकमवगच्छत एव प्रश्नार्थं तदप्रकाशस्य त्वयाऽपि वक्तव्यत्वाच्च। अन्यथा प्रष्टुस्तदवगमाभावे तस्य प्राक्तनवह्न्यनुमानविलोपप्रसङ्गात् । तदवगमं विना तदा तस्यानुमित्यङ्गीकारे तत्रैव व्यभिचारेण त्वदभिमतव्याप्तिज्ञानस्यानुमित्यकारणत्वप्रसङ्गात् । न च दूरे जलज्ञानमनभ्यासदशादोषात्संदिग्धप्रामाण्यमिति तदाहितार्थसंदेहात्प्रश्नोऽज्ञानानुभवश्चेति वाच्यम् । अनभ्यासदशापन्नज्ञाने प्रकाशमानस्यापि जलस्याप्रकाशमानत्वाङ्गीकारे प्रामाण्यसंशयस्यैवानवतारप्रसङ्गात् । प्रामाण्यशरीरनिविष्टस्य प्रामाण्यसंशयविषयज्ञानविषयीभूततद्वत्त्वभागातिरिक्तस्य पुरोवर्तिविशेष्यकत्वस्य जलत्वप्रकारकत्वस्य च संशयविपर्यासानास्पदतया प्रामाण्यसंशयस्य तद्वत्त्वसंशयपर्यवसन्नत्वात् । एवमस्मिञ्ज्योतिर्मण्डले कश्चन्द्र इत्यादिश्चक्षुषा चन्द्रमण्डलादिकं पश्यत एव प्रश्नोऽपि प्रकाशमानस्याप्रकाशमानत्वसाधक उदाहर्तव्यः । तत्प्रपञ्चस्त्वन्यत्र कृतोऽनुसंधेयः। इदं त्वत्रावशिष्यते । परसिद्धान्ते सत्यमज्ञानमस्ति, पूर्वपक्षे तु कल्पितमेव तदभ्युपगम्यते । कल्पितं च न तदप्रकाशोपपादकमिति । तदपवरके प्रविशता तदा लोके कल्पितस्यापि तमसस्तदप्रकाशोपपादकत्वं दृष्टमित्यादियुक्तिभिरस्माभिः सिद्धान्तसंग्रहादिषु दर्शिताभिर्निरस्तप्रायमिति नेह प्रपञ्च्यते ॥ १५ ॥

एवं निर्गुणस्यानधिगततया विचार्यत्वे संभवेऽपि तत्र विचिकित्सा चेत्सगुणब्रह्मविषयतयैव शास्त्रारम्भः स्यात् । न च सर्ववेदान्तानामद्वैतिदर्शितन्यायैरखण्डैकपरत्वात्सगुणे ब्रह्मणि मानाभावः । अद्वैतिनां मतेऽध्यारोपापवादन्यायेनाद्वितीयब्रह्मप्रतिपादने महातात्पर्येण स्वरसतः प्रवृत्तानामपि वेदान्तानां मध्ये केषांचिद्वाक्यानां सृष्टिवाक्यप्राप्तगुणसाहितब्रह्मोपासनाविधिपरत्वस्य ब्रह्मणस्तदुपासनाविषयगुणवत्त्वप्रतिपादकत्वस्य चाङ्गीकृतत्वादित्यभिप्रेत्याऽऽह—यदीति ।

श्रुतीनां कासांचित्तदपि कथयत्येव विषयं
महातात्पर्येण प्रगुणमगुणे च स्थितिजुषाम् ॥ १६ ॥
तस्मात्तुच्छं प्राचि पक्षे शास्त्रानारम्भवर्णनम् ।
तथैव तत्सिद्धान्तेऽपि तदारम्भसमर्थनम् ॥ १७ ॥

===

## अथ जिज्ञासाधिकरणसिद्धान्तदूषणप्रकरणम् ॥

अद्वैते यद्यशेषश्रुतिशिखरगिरामैकमत्यं निरास्यं
तासां ब्रह्मेतिशब्दो गुणगरिमनिमित्तोऽपि नेष्टे गुणत्वात् ।

---

व्या०—इत्थं कृतं पूर्वपक्षस्य दूषणमुपसंहरन्नेव तत्सिद्धान्तस्य दूषणं वक्तुं तस्याप्यसारतां प्रतिजानीते—तस्मादिति । परेण स्वकीयाधिकरणपूर्वपक्षप्रदर्शनव्याजेनाद्वैतवाद एव शास्त्रानारम्भदूषणं दर्शितमिति तत्साधारण्याय पूर्वपक्षस्य प्राचि पक्ष इति निर्देशः ॥ १६ ॥ १७ ॥

इति जिज्ञासाधिकरणपूर्वपक्षदूषणप्रकरणं समाप्तम् ॥

---

अत उपरि सिद्धान्तमनूद्य दूषयति—अद्वैत इति । सर्वेषां वेदान्तानां सजातीयविजातीयस्वगतभेदरहिते निर्विशेषजीवचैतन्यरूपे ब्रह्मणि तात्पर्यमाश्रित्य कृतस्य पूर्वपक्षस्य निरासाय सर्ववेदान्तप्रतिभटत्वेन विचारविधिवाक्यगतब्रह्मशब्दस्त्वया कीर्तितः । न चायं गुणपूर्तिनिमित्तः सन्नपि सर्वानपि वेदान्तानुप-

---

टि०— १ सर्वेषां वेदान्तानामिति—" स्वाध्यायोऽध्येतव्यः " इत्यध्ययनविधिगृहीतेषु सर्वेषु वेदान्तेषु " तद्विजिज्ञासस्व । तद्ब्रह्म " ( तै० उ० ३ । १ ) इत्यादिवाक्यानां तद्घटकपदानां चान्तर्भूतत्वेन पूर्वपक्षिणा लाघवाख्यं कंचिन्न्यायमाश्रित्य प्रत्यगभिन्ने ब्रह्मणि तेषां तात्पर्यवर्णने ब्रह्मपदस्यापि तत्र तात्पर्यस्य निर्णीतत्वेन ब्रह्मशब्दस्य कोऽर्थ इति जिज्ञासैव नोदेति । तदनुदये तदर्थनिर्णायकत्वेन कस्यापि न्यायस्याप्रवृत्त्या पूर्वपक्ष्यभिमतातिरिक्तार्थशून्यब्रह्मपदस्य सर्ववेदान्तप्रतिभटत्वं शक्रेणापि निरूपयितुमशक्यमिति भावः । अत एव " गुणपूर्तिनिमित्तकब्रह्मशब्दस्यापि पूर्वपक्षनिरासकत्वं युक्तम् । अद्वैतिदर्शितोपक्रमादिन्यायजातमवलम्ब्य पूर्वपक्षप्रवृत्तेरनभ्युपगमेन व्याहतिदोषोद्धारसमये लाघवाख्यं कंचिन्न्यायमवलम्ब्य पूर्वपक्षप्रवृत्तेः प्रदर्शितत्वेन च तस्य तत्र प्रतिभटत्वोपपत्तेः । वेदान्तानामद्वैतपरत्वव्यवस्थापकलाघवाख्यशुष्ककतिपयन्यायापेक्षया तेषां भेदपरत्वव्यवस्थापकगुणपूर्तिनिमित्तकब्रह्मशब्दस्य श्रौतत्वेन सकलवेदविचारविधायकविध्युद्देशगतत्वेन च प्रबलत्वात् " इति प्रलपनमपास्तम् ॥ १६ ॥ १७ ॥

ब्रह्मशब्दस्यापि पूर्वपक्षिणैव निर्णीतार्थकत्वेनार्थानाकाङ्क्षया सर्वश्रुतिविरुद्धगुणपूर्तिवाचकत्वायोगात् । लाघवाख्यं कंचिन्न्यायमवलम्ब्याद्वैत्यभिमतोपक्रमादिकं परि-

निर्दोषाशेषदीव्यद्गुणजुषि कलयन्सर्ववेदैकमत्यं
तद्बद्धत्वादिवाचा त्वमपि खलु तथैवाऽऽन्यपर्यं ब्रवीषि ॥१८॥

व्या०—क्रमादिदृढन्यायनिर्णीताद्वैततात्पर्यात्प्रच्यावयितुं शक्तः । प्रत्युत स्वयमेव तद्गुणभूतत्वात्तदनुगुणमेवाद्वैतवाद्यभिमतत्रिविधपरिच्छेदराहित्यमर्थमवलम्बेत । दर्शितश्चायं न्यायस्त्वयाऽपि "न स्थानतोऽपि" (ब्र० सू० ३ । २ । ११) इत्यधिकरणे । तत्र हि "कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ । प्राज्ञः कारणबद्धस्तु द्वौ तु तुर्ये न सिध्यतः" ( गौ० का० १ । ११ ) इत्यादिश्रुतिवाक्याद्विश्वतैजसप्राज्ञादिरूपस्य भगवतोऽपि बद्धत्वादिदोषोऽस्तीत्याशङ्क्योक्तमनुव्याख्याने– "सर्वत्राशेषदोषोज्झः पूर्णकल्याणचिद्गुणः । तद्विरुद्धं तु यत्तत्र मानं नैव भवेत्क्वचित् । महातात्पर्यरोधेन कथं तन्मानमत्र तु" इति । न्यायसुधायां चोक्तम् । "सकलश्रुतिस्मृतीतिहासपुराणानां परमेश्वरस्याशेषदोषदूरत्वे समस्तगुणपूर्णत्वे च यन्महातात्पर्यं तद्विरोधेन तद्वाक्यमत्र भगवतो दोषवत्त्वादौ कथं मानं भवेत् । दृष्टं हि निर्णीतमहावाक्यार्थविरुद्धस्य तदवान्तरवाक्यस्य तत्राप्रामाण्यं, यथा स्वर्गप्रयोजनाग्निहोत्रपरमहावाक्यार्थविरुद्धस्य यद्यमुष्मिँल्लोकेऽस्ति वा न वेति" इत्यादेस्तदवान्तरवाक्यस्य । महावाक्यं हि

टि०—त्यज्य प्रवर्तितपूर्वपक्षं प्रति ततोऽपि प्रबलन्यायासूचकस्य निर्विशेषस्वरूपबोधकस्य ब्रह्मशब्दस्य प्रतिभटत्वायोगात् । अद्वैत्यभिमतन्यायात्प्रबलत्वेन त्वदभिमतस्य विधिवाक्यगतस्यापि ब्रह्मशब्दस्य गुणपूर्णे शक्तिग्राहकप्रमाणानाकाङ्क्षया तदनुपन्यासेन च केवलं प्राबल्यस्य गगनकमलिनीकल्पत्वाच्च । यच्चापि "शास्त्रयोनित्वेक्षत्यधिकरणयोः कारणवाक्यानां तर्कमात्रेणानुमानसांख्यस्मृतिप्राप्तपरमाणुप्रधानकारणानुवादित्वमिति पूर्वपक्षप्रतिभटत्वेन श्रौतमेवोपनिषदत्वेक्षणादिन्यायजातं त्वयाऽपि सिद्धान्तन्यायतयोपेयते, तत्रापि त्वया कारणवाक्यानामनुमानसांख्यस्मृतिप्राप्तकारणानुवादित्वस्य तादृशानेव न्यायैः समर्थयितव्यत्वात् । समर्थितं च कारणवाक्यानामनेकन्यायैरनुमानसांख्यस्मृतिप्राप्तकारणानुवादित्वम् । "यानि वेदवाक्यानि सर्वज्ञस्य सर्वशक्तेर्ब्रह्मणो जगत्कारणत्वं प्रतिपादयन्तीत्यवोचः, तानि प्रधानकारणत्वपक्षेऽपि योजयितुं शक्यन्ते" इति भाष्येण । तस्मात्त्वन्मते यथा शास्त्रयोनीक्षत्यधिकरण.योरुत्थानं तथाऽस्मन्मतेऽपि प्रथमाधिकरणसिद्धान्तोत्थानं युक्तम्" इति भणनं, तदपि निरालम्बनम् । वैषम्यात् । तथा हि–मन्मत उभयत्राधिकरणयोरौपनिषदत्वेक्षणप्रतिपादकवाक्याघटितकारणवाक्यानां सांख्याद्युक्तन्यायैरनुवादकत्वव्यवस्थापनेन प्रवृत्तस्य निरासाय कारणवाक्याघटकः "तं त्वौपानिषदं पुरुषं पृच्छामि" ( बृ. ३·१·२६· ) "तदैक्षत" ( छा. ६.२.३. ) इत्यादिश्रुत्यालम्बनेन सिद्धान्तः प्रवृत्तः । त्वन्मते तु ब्रह्मशब्दघटितानां सर्वेषां वेदान्तानां निर्विशेषपरत्वव्यवस्थापनेन प्रवृत्ते पू-

नाऽऽशङ्क्योत्पत्तिशिष्टास्थितिरिह यत इत्यन्यसिद्धानुवादा-
त्त्यक्तं चोत्पत्तिवाक्यावगतमपि पशोर्भूरिबाधाद्धविष्ट्वम् ।

व्या०—प्रधानं, अनन्यार्थत्वात् । अप्रधानं त्ववान्तरवाक्यम् । तदर्थप्रतिपत्तिहेतुत्वादिति । तस्माद्द्वैतवादिदर्शितोपक्रमादिन्यायेभ्यः प्रबलतरैर्न्यायैः सर्ववेदान्तानां सगुणे महातात्पर्यं प्रसाध्यते चेत् । एवं कृतपूर्वपक्षनिरासो लभ्यते न तु ब्रह्मशब्दशक्तिदर्शनमात्रेणेति भावः ॥ १८ ॥

स्यादेतत् । जीवातिरिक्ते ब्रह्मणि प्रमाणं नास्तीति प्रत्यवतिष्ठमानं पूर्वपक्षिणं प्रति तत्र प्रमाणत्वेनोपन्यस्तं ब्रह्मपदम् । तच्चाज्ञातस्य ज्ञापकमुत्पत्तिस्थानीयमिति तत्प्रतिपादितं गुणपूर्णत्वमुत्पत्तिशिष्टम् । तेन जीवातिरिक्ते ब्रह्मणि सिद्धे वेदान्तेषु सर्वैरपि ब्रह्मप्रकरणैस्तत्रैव वर्तितव्यमिति तत्प्रतिपादितानि निर्गुणत्वजीवाभिन्नत्वादीन्युत्पन्नशिष्टानि । अत उत्पत्तिशिष्टप्राबल्यमर्यादया ब्रह्मपदस्य सर्ववेदान्तेभ्यः प्राबल्यं स्यादित्याशङ्क्याऽऽह—नेति । स्यादेतत् । एवं यदि ब्रह्मणो धर्मिणस्तद्ब्रह्मेत्यत्रत्यं ब्रह्मपदमज्ञातस्य ज्ञापकं स्यात् । नत्वेवं तस्य "यतो वा

टि०—र्वपक्षे सर्ववेदान्तप्रतिभटत्वेन तदन्तर्गतब्रह्मशब्दमालम्ब्य सिद्धान्तो दर्शितः" । निर्विशेषबोधकसर्ववेदान्तघटकत्वेन ब्रह्मशब्दस्य दुर्बलतया गुणत्वेन तद्बन्धत्वादिवचनवत्प्रतिभटत्वं न सिध्यति । एतेन "ब्रह्मपदमज्ञातज्ञापकमुत्पत्तिवाक्यस्थानीयमिति तत्प्रतिपादितं गुणपूर्णत्वं जीवभिन्नत्वादिकं चोत्पत्तिशिष्टप्राबल्यमर्यादया प्रबलम्" इत्यपास्तम् । ब्रह्मपदस्य गुणपूर्णवाचकत्वं नाद्यापि सिद्धमिति सगुणे प्रमाणतया तदुपन्यासस्य मोहमूलत्वात् । अन्यथा प्रमाणत्वेनोपन्यासाद् गुणपूर्णवाचकत्वसिद्धिः । तत्सिद्धौ तस्य प्रमाणतयोपन्यास इति परस्पराश्रयस्य वज्रलेपापत्तेः । अज्ञातज्ञापकत्वं वेदस्य नास्तीति वदतस्तवोत्पत्तिवाक्यगतस्यापि ब्रह्मशब्दस्य तदभावात् । ग्रन्थकृताऽनुवादत्वोक्तेश्च । किंच सजातीयविजातीयस्वगतभेदनिषेध एवोत्पत्तिशिष्टम् । "सदेव" इति वाक्ये तथैव भानात् । न च सदेवेत्यादिवाक्यस्य स्वव्याघातेन भेदत्रयनिषेधकत्वं न युज्यते । आपातप्रतीतार्थपरत्वे मीमांसावैयर्थ्यात् । शब्दमात्रस्य स्वरसतः सविशेषप्रतीतिजनकत्वेन लक्षणाकल्पनोत्तरभावित्वदभिमतत्रिविधभेदराहित्यपरत्वस्य स्वारसिकत्वासिद्धेः । "सत्त्वं स्वातन्त्र्यमुद्दिष्टम्" "अतृत्वाच्च तदादानादात्मेति परमो हरिः" इत्यादि स्मृतिपर्यालोचनया स्वातन्त्र्यादिगुणकस्यैव "सदेव सौम्य" "आत्मा वा इदम्" इत्यादिश्रुतिभिः प्रतीतेरिति वाच्यम् । सत्त्वस्यानवस्थाभिया सत्त्वं सदिति प्रतीत्या च सद्रूपत्वावश्यकत्वेन तत्र भेदत्रयराहित्याभ्युपगमे व्याघाताभावात् । सत्त्वं स्वातन्त्र्यमिति भवत्कल्पितस्मृत्यभ्युपगमे स्वतन्त्रस्य ब्रह्मवत्सृष्टिप्रलयाद्यभावापत्त्या त्वन्मत एव व्याघातात् । लक्षणां विनैवोक्तत्रिविधभेदराहित्यस्य संप्रदायानुरोधेन निरूपयितुं शक्यत्वादिति दिक् ॥ १८ ॥

१ यत इति—यत्वत्र "यदाग्नेयादिवाक्यवत्, यतो वेत्यादेर्विशिष्टविधित्वमभ्युप-

अस्ति श्रुत्यन्तरानुग्रह इति सुशकं तद्धविष्ट्वेऽपि वक्तुं
रूपत्वादीव कुम्भे गुणिनि गुणगतं नापि नाम्नो निमित्तम् ॥१९॥

---

व्या०—इमानि भूतानि" (तै० ३।१) इति। यदुपबन्धबलेन जगत्कारणतया सहान्यतः प्राप्तस्य धर्मिणोऽनुवादकत्वावगमात्। ततश्च "सदेव सौम्येदमग्र आसीत्" छा० ६।२।१) "आत्मा वा इदमेक एवाग्र आसीत्" (ऐ० १।१) इत्यादिकारणवाक्यमेव तत्प्रापकं वक्तव्यम्। तत्र च सजातीयविजातीयस्वगतभेदनिषेधः स्वरसतः प्रतीयत इति स एवोत्पत्तिशिष्टो न गुणपूर्णत्वमिति विपरीतमेव बलाबलम्। अस्तु वा तदेव ब्रह्मपदमज्ञातज्ञापकं, तथाऽपि नात्रो[1]त्पत्तिशिष्टन्यायावतारः। उत्पत्तिशिष्टमपि हि न भूरि बाधाय प्रभवति। अत एव "पशुमालभेत" इत्युत्पत्तिवाक्ये देवतासंबधेनावगतं पशोर्हविष्ट्वं "पशुं विशास्ति" "हृदयस्याग्रेऽवद्यति" इत्यादिहृदयादिहविष्ट्वगमकानेकावदानवाक्यात्त्यक्तम्। इह "बृहन्तो ह्यस्मिन् गुणाः" इति श्रुत्यन्तरसाहाय्यमस्तीति चेत्, किं ततः, पशोर्हविष्ट्वेऽपि "जुष्टं देवानामिदमस्तु हव्यम्" इति तदुपकरणमन्त्रसाहाय्यमस्ति। तथाऽपि बह्ववदानवाक्याविरोधात्तद्धविष्ट्वं त्यक्तं चेत्, गुणादिपूर्तिमत्त्वमप्यनेकाद्वैतवाक्याविरोधात्किमिति न त्यक्तव्यम्।

---

टि०—गम्यते। न च तत्र प्रापकवाक्यान्तराभावाद्विशिष्टविधित्वम्। प्रकृते सदेवेत्यादिकं वाक्यान्तरं प्रापकमस्तीति वैषम्यमिति वाच्यम्। वैपरीत्यस्यापि सुवचत्वात्। तयोर्भिन्नशाखास्थत्वेनानुवादित्वानुपपत्तेश्च" इति। तदपि काशकुशावलम्बनम्। "यच्छब्दयोगः प्राथम्यमनुवादस्य लक्षणम्" इत्यौत्सर्गिकनियमस्य बाधकाभावेऽवश्यमाश्रयणीयतया सदादिवाक्ये यच्छब्दाभावेन वैपरीत्याप्रसक्तेः। सदादिवाक्यस्य शाखान्तरस्थत्वेऽपि सत्यं ज्ञानमित्यादिवाक्यस्य पुरोवादस्य तच्छाखायामेव सत्त्वेन ब्रह्मशब्दस्यानुवादत्वापरिहार्यत्वाच्च। किंच विशिष्टविधित्वाभ्युपगमे जन्माद्यधिकरणे वक्तृश्रोतृसाधारणसकलस्थूलप्रपञ्चस्रष्टृत्वमनुवाद्यमित्यादिनाऽनुवादकत्वकथनपरत्वदीयग्रन्थविरोधश्च। न हि विशिष्टविधिस्थल एकांशोऽनूद्यतेऽपरांशो विधीयत इति प्रामाणिकैरभ्युपगम्यत इति दिक्।

१ उत्पत्तिशिष्टन्यायावतार इति—यच्छब्दाघटितानां पुरोवादानां बहूनां सत्त्वात्तदुदितनिर्विशेषस्वरूपमनूद्य विचारमात्रं तद्विजिज्ञासस्वेति वाक्ये विधीयते, नतु गुणपूर्तिरपि। उभयविधाने वाक्यभेदापत्तिरिति भावः। एतेन "उत्पत्तिवाक्यावगतपशोर्हविष्ट्वे हृदयादिवाक्यानामानर्थक्यवद् ब्रह्मणो गुणपूर्तिमत्त्वे निर्विशेषाभेदवाक्यानां वैयर्थ्याभावेन वैषम्यात्। आनर्थक्यप्रतिहतानां विपरीतं बलाबलमित्यङ्गीकारात्। निर्विशेषवाक्यानामभेदवाक्यानां चाहेयगुणविषयतया तदधीनत्वाद्यर्थतया च सार्थकत्वम्" इति प्रत्युक्तम्। यच्छब्दघटितवा-

व्या०—एतेन ब्रह्मपदस्य श्रुतिरूपतया निर्गुणत्वादिप्रतिपादकवाक्येभ्यः प्राबल्यमित्यपि शङ्का निरस्ता । प्रथमोपस्थितिप्रयुक्तबलाद्बहुत्वप्रयुक्तबलस्यैवाधिकत्वात् । "विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्स्वधर्मत्वम्" इति न्यायात् । अपि चायुक्तं गुणबृहत्त्वस्य गुणिनि शब्दप्रवृत्तौ निमित्तत्वम् । अन्यथा रूपत्वरसत्वगन्धत्वादिनिमित्तीकृत्य कुम्भेऽपि रूपरसगन्धादिशब्दप्रवृत्तिप्रसङ्गात् । तस्माद्द्वैतविषयमहावाक्यार्थविरोधादद्वैतस्योत्पत्तिशिष्टत्वेन तदविरोधात् । बहुवाक्यविरोधात्, गुणगतधर्मस्य गुणिनि शब्दप्रवृत्तिनिमित्तत्वायोगाच्च । ब्रह्मशब्दो न गुणबृहत्त्वनिमित्तः, किंतु परब्रह्मण्यद्वैत्यभिमतत्रिविधपरिच्छेदराहित्यनिमित्तः । एवं "बृहन्तो ह्यस्मिन्गुणाः" इति श्रुतिरस्तीति चेत् । सा व्यावहारिकगुणविशिष्टसगुणब्रह्मणि कथंचित्स्तुतिपरतया नेतव्या । अद्वैतिभिः

---

टि०—क्यस्य पुरोवादानुसारेणार्थानभ्युपगमेऽनुवादत्वभङ्गेनाप्रामाण्यापत्त्या प्राबल्याभावेन ततो निर्गुणवाक्यानां त्वदुक्तार्थासंभवात् । किंच निर्विशेषवाक्यानां हेयगुणराहित्यपरत्वे लक्षणाद्वयकल्पनाया अभेदवाक्यानां तदधीनत्वपरत्वे च सामानाधिकरण्यभङ्गस्य चाऽऽपत्तेः। अपि च हेया गुणा ब्रह्मणि प्रसक्ताश्चेत् तेषां त्वयाऽऽरोपानभ्युपगमेन प्रामाणिकतया निषेधायोगात् । त्वयाऽलीकस्यैव निषेधप्रतियोगित्वाङ्गीकारेण तेषामनलीकत्वात् । अप्रसक्ताश्चेत् कथं निषेधः । अन्यथा सर्षपे मेरुर्नास्तीति वाक्यस्य प्रामाण्यापत्तेश्च । न च बहुत्वप्रयुक्तप्राबल्यापेक्षया श्रुतित्वप्रयुक्तप्राबल्यस्य हीनतोक्तिर्मूलेऽयुक्तेति वाच्यम् । आकाशाधिकरणे ( ब्र० सू० १।१।२२ ) सूत्रकृतैव बहुत्वप्रयुक्तप्राबल्यस्य श्रुतित्वप्रयुक्तप्राबल्यादाधिक्योक्तेः । न च वह्निरनुष्णः पदार्थत्वात्, प्रमेयत्वात्, वाच्यत्वात्, इति बहूनामपि लिङ्गानामेकत्वाचप्रत्यक्षबाध्यत्वदर्शनाद्बहूनामप्येकबाध्यत्वं युक्तमिति वाच्यम् । तत्र त्वाचप्रत्यक्षस्य परीक्षितप्रामाण्यकत्वेन बाधकत्वं प्रकृते ब्रह्मशब्दस्य नाद्यापि गुणपूर्णपरत्वं परीक्षितमिति वैषम्यात् । सौत्रब्रह्मशब्दस्य गुणपूर्णपरत्वे भूमार्थकेनिप्रत्ययान्तगुणिशब्दप्रयोगेणैवोपपत्तौ संदिग्धब्रह्मशब्दप्रयोगेण भगवतो व्यासस्य प्रतारकत्वापातात् । तस्यायुक्तत्वादिति ।

१ 'बृहन्तो ह्यस्मिन्गुणाः' इति वाक्यस्य श्रुतित्वेन परकल्पितस्याप्रामाणिकत्वेऽप्यभ्युपेत्य तस्या अर्थमाह—व्यावहारिकेति । यत्तु "चन्द्रिकायां "निर्दोषश्रुतिसाक्षिभ्यां प्रमिते ब्रह्मजीवयोः। गुणपूर्त्यल्पगुणते मिथ्येति च न युज्यते" इति तदपि मन्दम्। सगुणश्रुतिसाक्षिभ्यां प्रमिते ब्रह्मजीवयोः । गुणपूर्त्यल्पगुणते मिथ्येति ब्रह्मवादिनः " इत्यपि सुवचत्वात् । अत एव "गुणपूर्णत्वमेव ब्रह्मशब्दप्रवृत्तिनिमित्तमित्यपि न चोदनीयम्। बृहिवृद्धावित्यनुशासनात् संकोचे प्रमाणाभावेन स्वरूपप्रयुक्तनिरतिशयमहत्त्वस्य प्रवृत्तिनिमित्तत्वसंभवेन गुणपूर्णत्वस्य तथात्वे प्रमाणाभावात् । "बृहन्तो ह्यस्मिन्गुणाः" इति वाक्यस्य

**यश्चेशे गुणगरिमा न जीववर्गे भूमाख्यस्त्वदभिमतो विरुद्ध एषः।**
**यत्तस्मिन्नपि घटते सदा सतोऽस्य स्वानन्दप्रभृतिवदावृतेरभानम्॥२०॥**

---

व्या०-"स्याच्चैकस्य ब्रह्मशब्दवत्" (ब्र० सू० २।३।५) इति सूत्रे ब्रह्मशब्दस्य निर्गुणवत्सगुणेऽपि वृत्तेरङ्गीकृतत्वादिति भावः। एतेन "अथातो ब्रह्मजिज्ञासा" (ब्र० सू० १। १। १) इति सूत्रस्याऽऽदावस्त्योंकारो ब्रह्मवाचकः सूत्रावयवः। स चावतेर्धातोरुत्पन्न ओतत्ववाची सन्योग्यतया गुणप्रोतत्वपर इति तत्रापि ब्रह्मणो गुणपूर्तिसिद्धेस्तस्य जीवाद्वैलक्षण्यमित्यपि कल्पना गलहस्तिता॥ १९॥

एवं ब्रह्मशब्दस्य गुणपूर्तिवाचकत्वमेव नास्तीति ब्रह्मणो जीवाभेदाविरोध उपपादितः। इदानीं तद्वाचकत्वमङ्गीकृत्यापि तदविरोधमुपपादयति—यश्चेति। परमेश्वरस्य गुणबृहत्त्वं नाम तद्गुणानामानन्दादीनां भूमा निरतिशयत्वरूप उत्कर्ष इति "भूम्नः क्रतुवज्ज्यायस्त्वम्" (ब्र० सू० ३।३।५९) "ब्रह्मदृष्टिरुत्कर्षात्" (ब्र० सू० ४। १। ५) इति त्वदीयाधिकरणयोः स्पष्टम्। जीवब्रह्माभेदे स जीववर्गेऽपि स्यादिति तथैवानुभवोऽपि भवेत्। तथा च तस्याल्पगुणत्वेनानुभवो न स्यादिति हि तस्य विरुद्धत्वमुच्यते। नायमस्ति विरोधः। जीवानां मुक्तिसमयभोग्यानन्दज्ञानबलाद्युत्कर्षमङ्गीकृत्य त्वया तस्य संसारे

---

टि०-कल्पितत्वेनाप्रामाण्यस्योक्तत्वात्। यत्त्वत्र "श्रुतिवाक्यकल्पनोक्तिरज्ञानमूला। सगुणनिर्गुणब्रह्मद्वैविध्यस्याप्यसिद्धिः" इति तदपि मन्दम्। "विंशल्लक्षणतोऽनूनस्तपस्वी बहुवेदवित्। वेद इत्येव यं पश्येत्स वेदो ज्ञानदर्शनात्" इति ब्रह्माण्डवचनोदाहरणेन त्वयैव स्वाचार्यस्य श्रुतिवाक्यकल्पकत्वस्य पूर्वमभ्युपगतत्वेनेदानीमज्ञानमूलत्वोक्तेरेवाज्ञानमूलत्वात्। सर्वासां श्रुतीनां पूर्वपक्षिणा निर्गुणपरत्वव्यवस्थापनात्। सगुणस्य विचार्यत्वे प्रमाणाभावात्। विचारविधिवाक्यगतब्रह्मशब्दस्यानिर्धारितार्थकत्वेन दोलायमानत्वात्। न च तवापि ब्रह्मशब्देनैवाखण्डार्थसिद्धावखण्डार्थवादानारम्भः स्यादिति वाच्यम्। तत्पदार्थस्याखण्डस्य ब्रह्मपदेन सिद्धावपि वाक्यार्थसाधकाखण्डार्थवादारम्भसंभवेन तदाक्षेपस्य मतान्तराज्ञानमूलत्वेन हेयत्वात्। यदपि गुणपरिच्छेदाभिन्नस्य वस्तवपरिच्छेदस्य नृशृङ्गायमाणत्ववचनम्, तदपि दूरत उत्सारणीयम्। गुणपरिच्छेदवतो घटवदब्रह्मत्वापत्तेः। गुणपरिच्छेदस्य गुणान्योन्याभावरूपस्य वस्त्वपरिच्छेदत्वं वदतः खरशृङ्गायमाणत्वात्। इत्यलमसंभाष्यसंभाषणेनेति दिक्॥ १९॥

१ यश्चेश इति। 'त्वदभिमतो भूमाख्यो यो गुणगरिमा' ईशे वर्तत एष जीवे न विरुद्धः। यत्—यस्मात् सदा तस्मिन् सतो विद्यमानस्य स्वानन्दप्रभृतिवदावृतेरभानं घटते' इति योजना।

२ जीवानामिति—मुक्तिसमये भोक्ष्यमाणस्याऽऽनन्दस्येदानीमपि भाने मुक्तिसंसारयोः

व्या०—किंचित्प्रकाशमानस्यापि सर्वात्मना प्रकाशे मुक्तिसंसारयोरविशेषप्रसङ्गदिति तत्परिहारार्थमविद्यावरणस्योपपादितत्वेन तत एव तस्मिन् परमेश्वरगुणपूर्तिसत्त्वेऽपि तदननुभवस्याल्पगुणत्वानुभवस्य च समर्थितप्रायत्वात् । स्वकीयमुक्तिभोग्यानन्दाद्युत्कर्ष एव परमेश्वरे गुणभूमेति वक्तुं शक्यत्वाच्च। अविद्यावरणनिवृत्तिरूपमुक्त्यनन्तरमपि हि केषांचित्परमेश्वरापरोक्षज्ञानानन्तरसंभूतासत्कर्मानुष्ठानविकर्मानुष्ठानदोषेण परमेश्वरेच्छावशात्स्वरूपानन्दस्य किंचिदनभिव्यक्तिमङ्गी कुरुषे। "स्तुतयेऽनुमितिर्वा" (ब्र० सू० ३।४।१४) इति त्वदीयाधिकरणे तथा निरूपितत्वात् । परमेश्वरस्य चाऽऽनन्दादिभूम्नो निरतिशयत्वरूपस्याप्यतीतक्षणानन्त्यवन्न्यूनाधिकभाववदसंख्यातनानाविशेषशालिनः कश्चिद्विशेष एव मुक्तान्प्रति यथाधिकारं भासत इति विशेषान्तराणां पुरुषभेदेनानभिव्यक्तिमङ्गी कुरुषे। "नाना शब्दादिभेदात्"

टि०—साम्यप्रसक्त्याऽविद्यावरणाभ्युपगमवद् ब्रह्मगुणभूम्नोऽप्यावरणकल्पनेनाभानोपपत्तिः। नहि विषयसत्त्वमात्रमुपलब्ध्याधायकं, किंत्वप्रतिबद्धसामग्रीसचिवम्। प्रकृतेऽविद्यावरणरूपप्रतिबन्धकसत्त्वान्न भानमिति भावः । एतेन " सुषुप्तावानन्दस्येव गुणभूम्नोऽपीषद्भानापत्तिः " इति निरस्तम्। आवृतस्येषदभिव्यक्तेरधिकाभिव्यक्तेर्वाऽऽपादयितुमशक्यत्वात् । प्राणिनां विचित्रप्रज्ञत्वादज्ञानामभानेऽपि ज्ञानिनां तत्संभवाच्च । न च भवदभ्युपगतब्रह्मज्ञाने प्रमाणं न पश्यामीति वाच्यम्। 'अहं ब्रह्मास्मि' (बृ० १।४।१० )इत्यादिश्रुतिरेव प्रमाणमिति पश्य । ब्रह्मज्ञानप्रयुक्तब्रह्मभावेऽभिव्यक्तस्य सार्वात्म्यस्य "तस्मात्तत्सर्वमभवत्" (बृ० १।४।१०) इति श्रुत्याऽनूदितत्वात्। ननु तच्छ्रुतेः स इदं सर्वं भवति, इत्यनिष्टफलप्रदर्शनमुखेन तथाविधोपासननिन्दापरत्वेन न त्वदभिमतार्थसिद्धिः। अत एव गीतायाम् " ईश्वरोऽहमहं भोगी " ( गी० १६।१४ ) इत्यादिना स्वस्मिन्नीश्वरत्वानुसंधानमासुरप्रकृतीनामेवोक्तम् । न चैवं जगदाहुरनीश्वरमिति पूर्ववाक्यविरोधः। तस्य स्वातिरिक्तेश्वरप्रतिक्षेपपरत्वादिति चेत्, न। ईश्वरोऽहमित्यनुसंधानस्य भवत्पूर्वपक्षिणा कुत्राप्यनुक्तत्वेनानुक्तोपालम्भात् । गीतायामेव " एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः " ( गी० १८।९ ) इति परिच्छिन्नबुद्धीनामेव नाशस्मरणात्। किंच " अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः " ( बृ० १।४।१० ) इति श्रुत्या भेददर्शिनः पशुतुल्यत्वावगमात् । पूर्वोक्तश्रुतावभेददर्शिनः कुत्रापि निन्दाया अश्रवणेन त्वदुक्तार्थस्याऽऽग्रहमूलत्वेन हेयत्वात्। "उदरमन्तरं कुरुते। अथ तस्य भयं भवति" ( तै० उ० २।७ ) इत्यादिना भेददर्शिनो जन्मसहस्रेऽपि भयानिवृत्तिश्रवणात्। विष्णोरग्रत एव सतोर्जयविजययोर्भेददर्शनेनासुरभावापत्तिस्मरणेन भवन्मते विष्णुदर्शनस्य मोक्षाप्रयोजकत्वावगमाच्च। अहं भोगीति वाक्यशेषानुसारेण " ईश्वरोऽहमित्यादेः " आरोपितराजभावविषयकत्वावगमात्। अत एव " जगदाहुरनीश्वरम् " इति वाक्यस्य स्वातिरिक्तेश्वरप्रतिक्षेपपरत्वोक्तिर्गर्भस्रावेणैव गता। यत्तु—सविशेषाभेदपक्षे युक्तं विद्यमानस्याऽऽवरणं

अपि च भगवानेकोऽनेकस्तनुस्तनुमानपि
स्वयमवयवा नास्त्यैश्वर्याद्विरोध इतीदृशम् ।
विषयगुणसांकर्यं वर्यं तवाभ्युपगच्छतः
कथमितरवद्भेदः सिध्येद्विरुद्धगुणान्वयात् ॥ २१ ॥

---

व्या०–( ब्र० सू० ३।३।६० ) इति त्वदीयाधिकरणे तथा निरूपितत्वात् । एवं परमेश्वरस्याऽऽनन्दादिभूम्नो जीवेऽपि सत्त्वे तस्य संसारदशायां विद्यमानेनाविद्यावरणेनाप्रकाशे काऽनुपपत्तिरिति भावः ॥ २० ॥

एवं गुणपूर्णत्वस्य जीवेऽपि संभवेनाविरोध उपपादितः । इदानीं तस्य विरुद्धत्वेऽपि परमते न जीवभेदसाधकत्वमित्याह–अपि चेति ।

इत्थं हि तव मतम्–परमेश्वरः स्वयमेकः सन्नप्यानन्दमयाधिकरणोदाहृतान्नमयप्राणमयादिरूपेण 'गुहाधिकरणोदाहृतशुभकर्मफलभोक्त्रात्मान्तरात्मरूपेण 'न संख्योपसंग्रहा' ( ब्र० सू० १।४।१२ )धिकरणोदाहृतपञ्चपञ्चजनरूपेण "न स्थानतोऽपीत्यधिकरणो( ब्र० सू० ३।२।११ )दाहृतविश्वतैजसप्राज्ञरूपेण चानेकः । तथा शरीरी सन्नपि 'अरूपवदेव हि तत्प्रधानत्वात्' ( ब्र० सू० ३।२।१४ ) इत्याधिकरणोक्तरीत्या परव्यूहावतारादिनानाशरीररूपः, एवमानन्दमयोऽवयवी सन्नपि तदीयशिरःपक्षपुच्छाद्यवयवरूपः, सर्वं चैतदचिन्त्याद्भुतशक्तेः [1]परमेश्वरस्यैश्वर्यवशान्न विरुध्यते । "अङ्गाङ्गित्वेन

---

टि०–ननु निर्विशेषाभेदपक्ष इति तत्तुच्छम् । यतः सविशेषयोर्जीवब्रह्मणोरभेदमुपगच्छता दण्डापूपन्यायेन निर्विशेषयोरभेदोऽभ्युपगत इति किं महदनिष्टमापादितं देवानांप्रियेणेति दिक् ॥२०॥

१ परमेश्वरस्येति–स चाचिन्त्याद्भुतशक्तिमानैश्वर्यवशात्परस्परविरुद्धैकत्वानेकत्वादिनानाधर्म इव जीवात्मभूतः सन्नपि क्रीडते । न तत्र धर्मादीनां विरोधोऽस्ति, प्रत्युताऽऽनुकूल्यमेव । विरोधविचारस्तु न कर्तव्य इति भावः । ननु धर्मिग्राहकमानेन मानान्तरविरोधाभावेन विनिगमकाभावेन च ब्रह्मण्येकत्वानेकत्वादीनां सिद्धावप्यल्पगुणत्वग्राहिसाक्षिप्रत्यक्षविरोधेन जीवे गुणपूर्णत्वरूपब्रह्मत्वासिद्ध्या ताभ्यां तयोर्भेदसाधनं संभवतीति चेत्, न चैतद्युक्तम् । स्वर्गकामादिवाक्येन प्रत्यक्षसिद्धदेहात्मभावस्य मिथ्यात्वाभ्युपगमवदभेदश्रुत्यनुसारेण जीवे साक्षिसिद्धाल्पगुणत्वस्य मिथ्यात्वमिति वक्तुं शक्यत्वात् । ईश्वरे जीवरूपे गुणपूर्णत्वगुणाल्पत्वाधायकैश्वर्यस्य संभवात् । अन्यथेश्वरस्य सर्वैश्वर्यं न स्यात् । यत्तु–ब्रह्मणि भेदाभावस्य प्रमिततया तदनेकत्वाद्युपपादकविशेषकल्पनं युक्तम् । जीवे त्वया विशेषानभ्युपगमेन विरुद्धधर्मसमावेशो भेदाभावश्च न युक्त इति । तदपि मन्दम् । जीवे विशेषस्य मयाऽनभ्युपगमेऽपि त्वयाऽभ्युपगतत्वेन तत्प्रयुक्तविरुद्धधर्मसमावेशस्येश्वराभेदस्य च युक्तत्वात् ।

विशेषं वैकुण्ठे यदि वदसि भेदप्रतिनिधिं
तमेकानेकत्वप्रभृतिगुणसंवासघटकम् ।
सजीवब्रह्मत्वव्यतिकरविरोधं च शमयतु
समं खल्वत्रापि श्रुतिशिरसि भेदापवदनम् ॥ २२ ॥

व्या०—भगवान्क्रीडते परमेश्वरः । ऐश्वर्याच्च विरोधश्च चिन्त्यस्तस्मिञ्जनार्दने" इत्यादिवचनादिति । एवं सर्वत्र विरुद्धधर्मसांकर्यमेव भगवदैश्वर्यातिशयप्रयुक्ततया बहुमन्यमानस्य तव मते सकलगुणपरिपूर्णस्यैव ब्रह्मणोऽल्पगुणजीवभावोऽपि संभवतीति न ब्रह्मशब्देन जीववैलक्षण्यं सिध्यति । विरुद्धधर्मेण भेदसाधनं खलु विरुद्धधर्मसांकर्यमन्यत्र परिहरतां शोभते। सर्वत्र विरुद्धधर्मसांकर्यमेव श्रेयां-समातिष्ठमानस्य तव कथं तदुपपद्यतामिति भावः ॥ २१ ॥

नन्वीश्वरः स्वकीयाचिन्त्याद्भुतशक्तिमात्रेण स्वस्मिन्नेकत्वादिविरुद्धधर्मसमावेशं घटयतीति मया नेष्यते। किंतु भेदप्रतिनिधिं विशेषमप्यपेक्ष्य तं घटयतीति। न च जीवेश्वरयोर्मया विशेष इष्यते । येन भेदाभावेऽपि तत एव तस्य स्वविरुद्धधर्मशाली जीवभावः स्यादित्याशङ्क्याऽऽह—विशेषमिति । परमेश्वरे 'नेह नानाऽस्ति किंचन' ( क० ४।११ ) इत्यादिस्वगतभेदनिषेधश्रुतिबलादेव हि तस्मिन्नेकत्वानेकत्वादिविरुद्धधर्मसमावेशाय त्वं विशेषमङ्गीकृत्य स्वयमेकोऽपि परमेश्वरो विशेषबलादनेक इत्यादि कल्पयसि । तथा जीवब्रह्मनिषेधश्रुतिबलात्तयोर्विरुद्धधर्मसमावेशाय भेदस्थाने विशेषमङ्गीकृत्य परमेश्वर एव विशेषवशाद्द्विविधजीवभावेन संसरतीति किमिति त्वया न कल्पनीयम् । न हि परमेश्वरे स्वगतभेदनिषेधश्रुतेर्जीवब्रह्मभेदनिषेधश्रुतेश्च कश्चिद्विशेषस्त्वयोपपादयितुं शक्य इति भावः ॥ २२ ॥

टि०—"नान्योऽतोऽस्ति द्रष्टा" (बृ० उ० ३।७।२३) 'तत्त्वमसि' (छा० ६।८।७) 'अहं ब्रह्मास्मि' ( बृ० १ । ४ । १० ) इत्यादिश्रुतिभिर्ब्रह्मणि जीवाभेदस्यापि प्रमितत्वेन त्वदभ्युपगतविशेषेण सर्वनिर्वाहात् । अपरीक्षितस्य प्रत्यक्षस्याप्रमात्वेन तद्विरोधेन श्रुतेरन्यथानयनस्यायुक्तत्वस्योक्तत्वात् । तस्माद्विशेषबलादेव जीवेऽपि गुणपूर्णत्वब्रह्माभेदयोरुपपत्तिरिति दिक् ॥ २१ ॥

१ विशेषवशादिति—पूर्वपक्षे जीवब्रह्मभेदानिषेधतदभेदप्रतिपादकः "नान्योऽतोऽस्ति द्रष्टा" ( बृ० उ० ३।७।२३) 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य' (छा० ६।३।२) इत्यादिश्रुतिबलाद्ब्रह्मण एवाविद्यया जीवभावाङ्गीकारवत्त्वन्मते स्वगतभेदनिषेधकः "नेह नानाऽस्ति" ( क० ४।११ ) इत्यादिश्रुतिसिद्धस्वगतभेदशून्यस्य ब्रह्मण एकत्वानेकत्वादिविरुद्धधर्मनिर्वाहकस्वशक्तिबलेन विशेषबलेन च जीवभावोऽस्त्विति भावः ॥ २२ ॥

वक्तव्यं ते विरुद्धं घटयति भगवच्छक्तिरेवेत्यवश्यं
नो चेत्कृत्स्नप्रसक्तिर्निरवयववचःक्षोभणं वा कथं स्यात् ।
एकोऽनेकः स्थितश्चेत्यणुरखिलजगद्व्यापकश्चेति वा ते
तत्र व्यर्थो विशेषः क्वचन तव तया सर्वनिर्वाहसिद्धेः॥२३॥

---

व्या०—एवं ब्रह्मणः सविशेषगुणपूर्तिमत्त्वाङ्गीकारेऽपि तदीयशक्तिमाहिम्ना विशेषबलेन च तस्यैवाल्पगुणजीवभावः संभवतीत्युक्तम् । इदानीं सर्वविधाविरुद्धधर्मसंघटने ब्रह्मणः शक्तिरेव पर्याप्तेति विशेषाङ्गीकारो व्यर्थ इत्याह—वक्तव्यमिति । [1]परमेश्वरशक्तिरेव सर्वत्र विरुद्धधर्मसंघटनीत्यवश्यं त्वयेष्टव्यम् । अन्यथा जीवस्य स्वतन्त्रकर्तृत्वे 'कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा' स्यादिति त्वदुक्तदूषणमदूषणं स्यात् । तथा हि—जीवस्य स्वतन्त्रकर्तृत्वनिरासार्थं 'इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः' (ब्र० सू० २।१।२२) इत्यधिकरणम् । तत्र "कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा" इति गुणसूत्रं जीवस्य स्वतन्त्रकर्तृत्वनिरासे हेत्वन्तरपरमिति तव मतम् । तत्र 'न जीवात्कारणं परम्' इति( ) श्रुतौ तद्व्यपदेशाज्जीवः स्वतन्त्रः कर्तेति पूर्वपक्षे स्वतन्त्रकर्तृत्वे तस्य हिताकरणमहितकरणं च न स्यात् । दृश्यते च हिताहिते विविञ्चतोऽपि तदुभयमास्तिककामुकादेरिति दूषणमुक्त्वा कृत्स्नप्रसक्तिसूत्रेण यदि जीवः स्वतन्त्रकर्ता स्यात्तदा तस्य सिद्धान्ते तत्स्वरूपातिरिक्तकार्यानुसारितारतम्यवत्कृतिरूपगुणानङ्गीकारात्स्वयमेव प्रवृत्तिशक्तिरूपस्य तस्य तृणादानादिष्वपि कृत्स्नशक्त्या प्रवृत्तिः प्रसज्यत इत्यनुभवविरोधः । न चैकदेशेन प्रवृत्तिः । तस्य निरंशत्वात् । अन्यथा निरवयवत्वशब्दव्याकोपः । न च 'व्यतिरेको गन्धवत्' (ब्र० सू० २।३।२७) इत्यधिकरणे जीवस्य सांशतायां व्यवस्थापयिष्यमाणत्वात् । अंशानां बहुत्वेनां-

---

टि०— १ परमेश्वरशक्तिरिति—यदि शक्तिरियं कृत्स्नप्रसक्त्यधिकरणोक्तदूषणलाभाय परमेश्वरे विरुद्धधर्मसंघटनीत्युच्यते, तर्हि तयैवाभेदबहुत्वयोर्विरुद्धयोः समावेशसंभवे विशेषाङ्गीकारो व्यर्थ इति भावः । न च धर्मिग्राहकमानेन तत्तत्कार्यनिर्वाहकतया सिद्धस्य विशेषस्येश्वरशक्त्या प्रतिक्षेपायोग इति वाच्यम् । विशेषसाध्यप्रयोजनस्येश्वरशक्त्यैव निर्वाहे विशेषस्य निष्प्रयोजनत्वेन निषेधात् । तत्तत्कार्यनिर्वाहकतया धर्मिग्राहकमानसिद्धत्वस्य स्वहृदयमात्रारूढत्वेनानुपन्यासात् । न च कालादृष्टादिवद् विशेषस्यापि कारणत्वमस्तु । अन्यथा कालादीनामप्येकेनान्यस्य प्रतिक्षेपापत्तेः । त्वन्मतेऽविद्ययैव सर्वनिर्वाहोपपत्तौ कारणमात्रोच्छेदप्रसङ्गाच्चेति वाच्यम् । कालादृष्टादिवद्विशेषस्य साधारणकारणत्वेन त्वयाऽ-

व्या०—शविशेषैः कार्यानुसारिणा तारतम्येन तस्य कर्तृत्वोपपत्तिः । बहुत्वस्य भेदव्याप्तत्वेन भेदस्यापि प्रसक्त्या भिन्नांशराहित्यरूपनिरवयवत्वशब्दव्याकोपतादवस्थ्यात् । न च विशेषबलेन बहुत्वोपपत्तिः । भेदेनोपपादनीयस्यांशांशिबहुत्वस्य चेतने विशेषेणोपपादने घटादावचेतने तस्य तेनैवोपपादनप्रसङ्गादिति दूषणान्तरं प्रदर्श्य तस्मादचिन्त्यशक्तिः परमेश्वर एव परस्परविरुद्धमप्यभेदमंशांशिकृतबहुत्वं च चेतनेषु विशेषेणैव निमित्तेन समावेश्याभेदेन निरवयवत्वशब्दकोपं बहुत्वेन कृत्स्नप्रसक्तिं च निराकृत्य कार्यानुरूपं जीवेन कारयतीत्यङ्गीकर्तव्यमिति तदुपसंहृतम् । अत्र परमेश्वरशक्तिमनपेक्ष्य विशेषेणैवाभेदबहुत्वयोर्विरुद्धयोः समावेशसमर्थने कृत्स्नप्रसक्त्यादिसूत्रोक्तदूषणं न लभ्येतेति स्फुटमेव । तदपेक्षायां तु सैव तव पर्याप्ता । किमजागलस्तनायमानविशेषकल्पनया । किमपि साधनान्तरमनपेक्ष्य कर्तुमकर्तुमन्यथा कर्तुमपि शक्तः परमेश्वर इति हि तव मतम् । तस्य शक्तिः कथं भेदापेक्षं बहुत्वमभेदेऽपि विशेषमपेक्ष्य संपादयति । न तु तमनपेक्ष्येति नियन्तुं शक्यते । यदि तस्य जगत्सृष्टौ प्रकृत्याद्यपेक्षावदभेदबहुत्वसमावेशसंपादने विशेषापेक्षा श्रुत्यादिप्रमाणसिद्धा स्यात्तदा स्वयमेव गन्तुं शक्तस्यापि दण्डावलम्बनवद्विशेषापेक्षाऽपि लीलामात्रेणेति तव कल्पना प्रसरेत् । न चैवम्, विशेषस्य विरुद्धधर्मसमावेशकल्प्यत्वात् । तस्य चाऽऽवश्यकपरमेश्वरशक्त्यैवोपपन्नत्वात् । अपि चैक एव विष्णुरनेकत्र सर्वेषां दक्षिणाक्षिस्थाने जाग्रदवस्थाप्रेरकेण "सप्ताङ्ग एकोनविंशतिमुखः" ( मा० ३ ) इत्याद्युक्तलक्षणेन विश्वाभिधानेन रूपेण प्रतिस्थानं समग्रेणैव स्थितः । यथा नानादेशस्थानशेषपुरुषान्प्रति सतताभिमुखेन समग्रेण रूपेण तरणिस्तत्तदूर्ध्वदेशे स्थितः, न तु बहुकुम्भसंभृताम्भोवत्तत्तदक्षिस्थानस्थितः स्वरूपतः शरीरतो वा भिन्नः । नापि बहुतृणाग्रप्रसारितपटवत्तत्तदाधिकरणेष्वेकदेशेन स्थित इति त्वया "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र" (ब्र० सू० ३।२।११) इत्यधिकरणे स्थापितम् । तथाऽणुरेव विष्णुस्त्वाखिलजगद्व्यापकश्च, सूक्ष्मतया दृश्यमान एव कृष्णस्य मुखे गर्भीकृतब्रह्माण्डस्य यशोदादृष्टस्यैकेन दाम्ना बन्धनानुभवाच्च, सूक्ष्म एव तदुदरे बहूनामपि दाम्नां बन्धुमपर्याप्तत्वस्य च तद्दृष्टस्य महत्त्वलिङ्गस्य सत्त्वादिति "अक्षरमम्बरान्तधृतेः" ( ब्र० सू० १ । ३ । १० ) इत्याधिकरणे "अस्थूलमनणु" ( बृ० ३ । ८ । ८ )

टि०—नङ्गीकारात् । कृत्स्नप्रसक्त्यधिकरणोक्तदूषणलाभायासाधारणकारणत्वेनैवाङ्गीकृतत्वात् । शक्तिरङ्गीकारे तादृशस्य तस्याजागलस्तनायमानत्वात् । मन्मतेऽविद्याया मूलकारणत्वेन

**किंचायं भेदसाध्यं कमपि घटयितुं कल्प्यते न त्वयाऽर्थं
किंतु व्याहारमात्रं क्वचन कथमिव स्याद्विरुद्धार्थयोगः।**

व्या०—इति श्रुतिवाक्यमणुत्वस्थूलत्वपरं व्यवस्थाप्य त्वया निरूपितम्। "दहराधिकरणे च" (ब्र० सू० १।३।१४) दहराकाशान्तस्थस्य परिच्छिन्नस्यैव ब्रह्मांशस्य "यावान्वा अयमाकाशस्तावान्वा" (छा० ८।१।३) इति श्रुत्यर्थतया बहिर्ब्रह्मांशवद्व्याप्तत्वं त्वयाऽङ्गीकृतम्। तत्रैव परिच्छिन्नस्य व्याप्तत्वासंभवमाशङ्क्यान्यत्रापि "एष आत्माऽन्तर्हृदयेऽणीयान्। व्रीहेर्वा यवाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वा" (छा० ३।१४।३) इत्यणीयस्त्वेन श्रुतस्यैवान्तर्हृदयस्थितस्य ब्रह्मांशस्य "एष आत्माऽन्तर्हृदये ज्यायान्पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः" (छा० ३।१४।३) इति सर्वतो ज्यायस्त्वश्रवणात्तद्वदिहाप्युपपद्यत इत्युपपादितम्। अत्र सर्वत्रापि केवलं परमेश्वरशक्त्यैवैकत्वमत्येकपर्याप्तानेकत्वयोरणुत्वमहत्त्वयोश्च विरुद्धयोः समावेश उपपादनीयः। न विशेषस्योपयोगोऽस्ति। विशेषो हि तव भेदप्रतिनिधिरेकस्यैवानेकत्वमापाद्य धर्मान्सांकर्येण निवेशयेत्। न चात्र द्विविधेऽपि विरुद्धधर्मसमावेशोदाहरणे नैकत्वापादनमस्ति। अत एवैतादृशोदाहरणे त्वया केवलं परमेश्वरशक्तिरेव नियामकत्वेनाऽऽश्रिता। उक्तं च "ऐश्वर्याद्रूपमेकं च सूर्यवद्बहुधेयता" (          ) इत्यादि। एवं च सत्यन्यत्रापि विरुद्धधर्मसमावेशसंघटने विशेषो व्यर्थः। परमेश्वरः स्वयमेकः सन्ननेकस्तनुस्तनुमानवयवोऽवयवी चेत्यादेः सर्वविरुद्धस्यापि विरुद्धधर्मसमावेशस्यावश्यं वक्तव्यतया तदीयशक्त्यैव निर्वाहोपपत्तेरिति भावः॥ २३॥

इतश्च परमेश्वरशक्त्यैवैकत्वानेकत्वादिविरुद्धधर्मसमावेशः संघटनीयो न विशेषेणेत्याह—किंचेति। अयं विशेषस्त्वया भेदसाध्यं किंचिदप्यर्थं घटयितुं न[1] कल्प्यते,

टि०—तत्तत्कार्यावान्तरकारणानां द्वारकारणत्वेन सार्थक्यात्। नहि तथा विशेषस्त्वया स्वीक्रियते येन तस्य सार्थक्यं स्यात्। अतो भेदाभावेऽपि तत्कार्यनिर्वाहः शक्तिसाध्यः, कर्तुमकर्तुमन्यथा वा कर्तुं शक्तः परमेश्वर इति त्वयाऽभ्युपगमात्। तस्मान्न विशेषसिद्धिरिति दिक्॥२३॥

१ न कल्प्यत इति। अयमत्र भावः—"विशेषोऽयं भेदाभावेऽपि तत्साध्यव्यवहारार्थं त्वया कल्प्यते, न तु कस्याप्यर्थस्य साधकतया। तथा च विशेषो भेद एव स्यात्, न तत्प्रतिनिधिः। "उक्तं च सुधायां (जिज्ञासाधिकरणे)—सकलभेदकार्यकारित्वे विशेषो भेद एव स्यान्न तत्प्रतिनिधिः" इति। ततश्च क्वचिद्भेदव्यवहारहेतुत्वं क्वचिदेकत्वानेकत्वादिपदार्थनिर्वाहकत्वं च विशेषस्य वदतस्तव पूर्वापरविरोधो न्यायसुधाविरोधश्च दुर्वार इति।" अत एव "विशेषस्य क्वचिद्भेदकार्यव्यवहारमात्रनिर्वाहकत्वाभ्युपगमेऽपि

संबन्धः स्याद्गुणानां गुणिभिरितरथा गोचरस्तत्प्रतीते-
र्न स्याद्भेदः पटादिष्वपि च घटयता सत्सु तन्तुष्वसत्त्वम् ॥२४॥

---

व्या०—किंतु यत्र भेदाभावेऽपि भेदाधीनो व्यवहारो दृश्यते, यथा लोके "नीलं सुगन्धि महदुत्पलमित्यादौ, वेदे" "सत्यं ज्ञानमनन्तं ब्रह्म" (तै० ब्र० १। १) 'आनन्दो ब्रह्म' ( तै० उ० ३।६ ) त्यादौ च, नीलगन्धादीनां ज्ञानानन्दादीनां च धर्मिणः परस्परस्माच्च भेदाभावेऽप्यपर्यायशब्दैरुक्तिरित्यादिस्तन्मात्रनिर्वोढृत्वेन कल्प्यते । भेदाभावेऽभेदस्थाने स्वयं भासमानः सन्नपर्यायशब्दप्रयोगादिकं निर्वर्तयतीति । नानेकत्वादिविरुद्धधर्मसमावेशरूपार्थनिर्वाहाय । यदि व्यवहारस्येव भेदाधीनस्यार्थस्यापि निर्वाहकोऽयमङ्गी क्रियते, तदा गुणगुणिनां घटस्य नीलवर्णो ब्रह्मण आनन्द इत्यादिधर्मधर्मिभावव्यवहारमूलप्रतीतिगोचरः संबन्धोऽपि तद्विरोधिनि सत्यप्यभेदे विशेषबलात्कल्प्यते । सत्सु तन्तुषु पटाद्यसत्त्वनिर्वाहाय भेदश्च न कल्प्यते । तन्तूनामवयवानां पटाद्यवयविनामभेदेऽपि विशेषबलादेव सत्त्वासत्त्वविरुद्धधर्मसमावेशोपपत्तेः । न चोभयत्रापीष्टापत्तिः, "अस्मत्पक्षे गुणाद्याश्च तद्वन्तो हि विशेषतः । अनन्यत्वान्नानवस्था भेदो नाशे भवेत्तथा" इत्याद्यनुव्याख्यानविरोधात् । अत्र हि तद्वन्तो हि विशेषत इत्यस्य व्याख्यानसमये भेदसंबन्धकार्यकरो हि विशेष इति न्यायसुधायां तदभिप्रायो वर्णितः । तेन यथा विशेषो भेदस्य प्रतिनिधिरिति शुक्लः पट इत्यादिप्रतीतौ स भासमानो भेदाधीनं सामानाधिकरण्यव्यवहारं निर्वर्तयति । तथा संबन्धस्यापि प्रतिनिधिरिति स एव पटः शुक्लगुणवानित्यादिप्रतीतौ भासमानस्तद्वत्त्वव्यवहारमपि निर्वर्तयतीति गुणगुण्यादिसंबन्धानङ्गीकारः स्पष्टीकृतः । अत एव समवायनिराकरणस्थलेऽपि गुणगुण्यादीनां संबन्धो नास्त्येवेति

---

टि०—तस्य भगवत्येकत्वानेकत्वादिविरुद्धधर्मसमावेशनिर्वाहकत्वाभ्युपगमे दोषाभावः" इत्याधुनिकप्रलपनं परास्तम् । वैरूप्याश्रयणस्य दोषत्वाच्च । न च धर्मिग्राहकमानेन तादृप्येणैव विशेषसिद्धिरिति वाच्यम् । विनिगमकाभावाद्वैपरीत्यापत्तेश्च । घटस्य नैल्यमित्यादिप्रतीतेः संबन्धमभ्युपगम्यैव निर्वाहेण घटस्य स्वरूपमितिवदुपपादनायोगात् । सत्कार्यवादिमते नाशस्थलेऽपि सूक्ष्मरूपेण कार्यस्य सत्त्वादत्यन्तभेदासिद्धेः । भेदस्यैव सत्त्वे तत्प्रतिनिधिविशेषकल्पनस्य सोमसत्त्वे पूतिकाग्रहणवद्धेयत्वाच्च । गुणगुणिनोः संयोगसमवायाभावेऽपि तादात्म्यस्य संभवाच्च । स्वरूपसंबन्धस्य विशेषरूपत्वे तत्पर्यायत्वापत्तेश्चेति दिक् ।

व्या०—व्यवस्थापितम्। स्वाभिमतं संबन्धान्तरमस्तीति तन्नोक्तम्। ब्रह्मतद्धर्माणामभेदे धर्मधर्मिभावो न युक्त इत्याशङ्कापरिहारार्थे "उभयव्यपदेशात्त्वहिकुण्डलवत्" (ब्र० सू० ३।२।२८) इति त्वदीयाधिकरणे च तदाशङ्कापरिहाराय सिद्धान्ते विशेष एव समर्थितः। नतु तदधीनः कश्चन संबन्धः। नन्वाश्रयाश्रयिभाव एवं धर्मधर्मिभावत्वाद् गुणगुण्यादीनां संबन्धः किमिति न स्यात्, न च तस्याद्विष्ठत्वात्संबन्धत्वानुपपत्तिः, संयोगस्यापि मन्मते द्विष्ठत्वाभावादिति चेन्न। त्वन्मते ययोरभेदस्तयोर्धर्मधर्मित्वव्यवहारे सत्यपि वस्तुत आश्रयाश्रयित्वानङ्गीकारात्। अत एवायं पट एतत्तन्तुसंबद्ध एतदाश्रितत्वादेतदाश्रितत्तृणादिवदिति समवायसाधकानुमाने तन्तुपटयोराश्रयाश्रयिभावासिद्धेरिति न्यायसुधायां स्वरूपासिद्धिरुक्ता। एवं तावद्गुणगुण्यादीनां विशेषाधीनसंम्बन्धान्तरसिद्धिप्रसङ्गोऽनिष्ट इति स्थितम्। तथा तन्तुपटादीनां भेदासिद्धिप्रसङ्गोऽप्यनिष्ट एव। "भेदो नाशे भवेत्तथा" इत्युदाहृतश्लोकशेषे सत्सु तन्तुषु विनश्यतां पटादीनामभेदवद्भेदस्याप्यङ्गीकृतत्वात्। न्यायसुधायां च तद्व्याख्यानानन्तरं स्यादेतत्, यथा भेदसाधकानां व्यपदेशभेदादीनां विशेषाश्रयणेनैवान्यथासिद्धिरुक्ता, तथा सत्यपि तस्मिन्नसत्त्वस्यापि विशेषेणैव निर्वाहः क्रियतां किं भेदाभ्युपगमेन, नैवम्। विशेषस्य भेदकार्यव्यवहारमात्रनिर्वाहकत्वेनासत्त्वं प्रत्यनिर्वाहकत्वात्, सकलभेदकार्यकारित्वे विशेषो भेद एव स्यान्न तत्प्रतिनिधिः" इतिशङ्कापरिहाराभ्यामुक्तार्थस्य स्थिरीकरणाच्च। तस्माद्विशेषस्य विरुद्धधर्मसंघटकताया अपि परमेश्वरशक्त्यायत्तत्वस्य विशेषाभावस्थलेऽपि परमेश्वरशक्त्यैव विरुद्धधर्मसंघटनस्य च त्वयाऽङ्गीकृतत्वात्। वस्तुतो विशेषस्य भेदसंबन्धकार्यव्यवहारमात्रनिर्वर्तकताया एव त्वयोक्तत्वाच्च। भेदाभावस्थलेऽप्येकत्वानेकत्वादिपरमेश्वरशक्त्यैव संपादनीयमिति व्यर्थः क्वाचित्क-

टि०— १ आश्रयाश्रयिभावासिद्धेरिति—यत्त्वत्र पराभ्युपगतस्य भेदगर्भस्याऽऽश्रयाश्रयिभावस्य तत्रासिद्धेरित्युक्ततया विरोधाभावः। तथाविधाश्रयाश्रयिभावस्यैव हेतुशरीरे प्रवेशादिति जल्पनं, तद्धेयमेव। भेदाघटितस्य तादृशसंबन्धस्य खरशृङ्गायमाणत्वेन पराभ्युपगतस्येत्यस्यायुक्तत्वात्। "ज्यायान् पृथिव्या" (छा० ३।१४।३) "अणीयान्व्रीहेर्वा" (छा० ३।१४।३) "त्वं स्त्री त्वं पुमानसि" (श्वे० ४।३) इत्यादिश्रुतिबलाद्व्यापकत्वाल्पत्वनानाजीवरूपत्वादिविरुद्धधर्मस्यापि शक्त्यैव तस्मिन्नुपपादनीयत्वात्। नचैवं शङ्कनीयं "ईश्वरस्यैकत्वानेकत्वादिविरुद्धधर्मसमावेशो न तदैश्वर्यविरोधीति तदीयशक्त्या तदुपपादनं युक्तं, बहुत्वल्पगुणत्वरूपविरुद्धधर्मसमावेशस्तु तद्विरोधीति न तया तदुपपादनं युक्तम्। कथमीश्वरोऽपि विविधदुःखादिकलुषितजीवभावं स्वस्यानुमन्येत, ईश्वरत्वविरोधादिति" "पराऽस्य शक्तिर्वि-

ऐश्वर्याज्जीवभावं कथमिव स भजेद्दुःखभीत्यादिदूष्यं
मैवं दुःखादयस्ते करणगुणतया न स्पृशन्त्येव जीवम् ।

व्या०—विशेषाङ्गीकारः । अपर्यायशब्दप्रयोगादेरपि परमेश्वरशक्तिकृतानेकत्वेनैवोपपत्तेः । अतो जीवेश्वरयोर्निर्विशेषाभेदेऽपि बह्वल्पगुणत्वरूपविरुद्धधर्मसमावेशः संघटत इति न गुणपूर्णत्वेन जीवादीश्वरस्य भेदसिद्धिरिति भावः ॥ २४ ॥

नन्वैश्वर्यबलादन्यसाध्यविरुद्धधर्मसंकरं संपाद्य क्रीडन्नपि परमेश्वरो विविधदुःखादिकलुषितं जीवभावं नानुमन्येतेत्याशङ्कामुद्भाव्य परिहरति—ऐश्वर्यादिति, भवेदेवं, यदि जीवभावस्त्वन्मते दुःखादिकलुषितः स्यान्नत्वेवम् त्वया दुःखादीनामन्तःकरणपरिणामत्वेनाङ्गीकृतत्वात् । ननु मन्मतेऽन्तःकरणपरिणामा एव दुःखभयादय इति । सत्यं, नतु ज्ञानेच्छाकृतिवदन्तःकरणवृत्त्यात्मधर्मरूपेण तद्द्वैविध्यमस्ति । सन्मुक्तियोग्यजीवेषु मुक्तौ तदनुवृत्त्यभावात् । अथापि दुःखादिमत्त्वं नाम दुःखादिस्वामित्वं न तु तदाश्रयत्वम् , । "इच्छास्वामित्वमेवोक्तमिच्छावत्त्वं न चापरम्" इति सांख्याधिकरणा (ब्र० सू० २।२।२)नुव्याख्यानेऽन्तःकरणवृत्तिरूपेच्छायामुक्तस्य न्यायस्य दुःखादिष्वपि तुल्यत्वात् । स्वामी च तेषामन्तःकरणोपादानानामपि जीव एव । क्षेत्रे फलितानां धान्यादीनामिव क्षेत्रपतिः । अत एव क्षेत्रपतेरहं धान्यवानित्यनुभववज्जीवस्याहं दुःखी बिभेमि द्वेष्मीत्यनुभव इति चेदुच्यते । यदि जीवस्य हेयतया प्रसिद्धदुःखादिमत्त्वं नाम दुःखादिस्वामित्वं हन्त तर्हि तत्परमेश्वरस्यैव स्यात्, न जीवस्य । परमेश्वर एव दुःखादिपरिणामिनोऽन्तःकरणस्य तदन्यस्य चेन्द्रियवर्गस्य स्वामी, नान्य इति त्वयेष्यते । त्वया "ज्योतिराद्यधिष्ठानं तु तदामननात्, (ब्र० सू० २।४।१५ ) इत्यधिकरणे "ब्रह्मणो वा एतानि करणानि चक्षुः श्रोत्रं मनो वागित्यादि" काषायणश्रुतिवचनात्सर्वान्तर्यामित्वाच्च परमेश्वर एव करणानां स्वामी, स तु स्वकीयैः करणैरनादिकालमारभ्य दर्शनादिकार्याणि जीवैः कारयतीति जीवकरणत्वव्यवहारस्तथाऽभिमानश्च स्वामिनः

टि०—विधैव श्रूयते" ( श्वे० ६।८) इति श्रुत्या मायाशक्तेरघटितघटनापटीयस्त्वावगमेन तया बह्वल्पगुणत्वरूपाविरुद्धधर्मसमावेशस्यैश्वर्याविरोधेनोपपादनसंभवात् । विरुद्धानां केषांचिदीश्वरे सामानाधिकरण्यं केषांचिन्नेत्यत्र वैषम्यहेतोरभावाच्चेति कृतं पल्लवितेन ॥ २४ ॥

१ जीवैः कारयतीति—इदमत्राऽऽकूतम् । "जीवानां प्रयोज्यकर्तृत्वे प्रयोजककर्तृत्वे चेश्वरस्य लोके पक्तुर्देवदत्तात्पाचयितुः कृष्णवर्मणो भोगाधिक्यवत्परमेश्वरस्यैवाधिकं भोक्तृत्वमिति सर्वप्राणिकरणगणप्रेरकस्य तस्य सर्वजीवराशिगतदुःखादिमत्त्वमवर्जनीयमि-

व्या०—कुठारैस्तत्प्रेरितेषु छिन्दत्सु तत्तद्भृत्यकुठारव्यवहारदर्शनात्, परकीयेऽपि बहुकालसंबन्धिनि तदीयतोपचारदर्शनात्, तथाऽभिमानदर्शनाच्चेति व्यवस्थापितत्वात्। "स्वामिनः फलश्रुतेरित्यात्रेयः" (ब्र० सू० ३।४।४४) इत्यधिकरणे मनुष्यादीनां स्वस्वेन्द्रियजन्यज्ञानकर्मस्वामित्वमुररीकृत्यैव सिद्धान्तप्रदर्शनाच्च। एवं हि त्वदीयं तदधिकरणम् "ब्रह्मविदाप्नोति परम्" (तै० ब्र० व० १) इत्यादिश्रुत्युक्तज्ञानफलं ज्योतिष्टोमादिकर्मफलं चेन्द्रियप्रेरकाणां देवानामेव भवति, उत कर्तृभूतानां मनुष्यादीनामपीति संशये, देवानामेवेति तावत्प्राप्तं, भगवदुपासनापुण्यफलमिन्द्रियप्रेरकदेवतापदं प्राप्तानां तेषां भगवत्प्रसादलब्धतत्तदिन्द्रियजन्यस्वामित्वफलवत्त्वात्। लोके च स्वामिन एव फलदर्शनात्। कर्तुरप्यस्वामिनः कर्मकरादेः क्षेत्रादिफलादर्शनात्। "यदु किंचेमाः प्रजाश्च शुभमाचरन्ति देवा एव तदाचरन्ति यदु किंचेमाः प्रजा

टि०—तीश्वरत्वापेक्षया जीवभाव एवाभ्यर्हित इति। अत एव वक्ष्यति—"त्वन्मतसिद्धपरमेश्वरभाव एव पापीयानिति कथं त्वदीयः परमेश्वरो जीवभावं नार्थयेत" इति। यत्तु "दुःखादिकलुषितत्वं दुःखादिभोक्तृत्वं, तच्च नान्तःकरणस्योपकरणस्य। अहं दुःखीति प्रतीतिवदन्तःकरणं दुःखीति प्रतीत्यभावादिति, नैतत्सारम्, "कामः संकल्पो विचिकित्सा" (बृ० १।५।३) "कामा येऽस्य हृदि श्रिताः" (क० ६।१४) "प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान्" (गी० २।५५) इत्यादिश्रुतिस्मृतिभिः कामादीनां करणधर्मत्वावगमेनान्तःकरणतादात्म्याध्यासेन जीवे तादृशप्रतीत्युपपत्तेः। अन्तःकरणस्य जडत्वेन जीवचैतन्याविद्धस्य तस्य तथाप्रतीत्ययोगाच्च। "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" (क० ३।४) इति श्रुत्या संहतस्यैव भोक्तृत्वाद्यवगमात्। न च "चिन्मात्रोऽहं सदाशिवः" (कैव० १।१८) इति श्रुत्या शुद्धस्याप्यहंत्वदर्शनात् भोक्तृत्वादिकमपि तस्यैवेति वाच्यम्। योऽयं त्वंपदार्थः साक्षी स चिदात्मकः परमेश्वर इति तदर्थत्वात्। अन्यथा प्रदर्शितसंहतभोक्तृत्वप्रतिपादकश्रुत्यनाञ्जस्यं स्यात्। नच देहादीनामिव मनसोऽपि, सहकारित्वमेव न भोक्तृत्वकोटौ प्रवेश इति वाच्यम्। देहेन्द्रियादीनां प्रत्येकं भोक्तृत्वापर्याप्तावपि विशिष्टात्मनि तत्पर्याप्तेः। अत एव सर्वेन्द्रियशरीरविशिष्टस्येश्वरस्य सर्वप्राणिगतसुखदुःखादिभोक्तृत्वेन जीवभावापत्तिरपरिहार्येति दिक्। यदपि—अन्याधीनदुःखादिस्वामित्वमेव दुःखादिकलुषितत्वं, जीवस्यापीश्वराधीनस्वामित्वोपगमात्। अत एवेन्द्रियप्रेरकाणां देवानां भगवद्दत्तं तत्तदवान्तरस्वामित्वमस्तीत्युक्तमिति, तदपि न मनोरमम्। स्वामित्वमात्रस्य भोक्तृत्वव्याप्तत्वेन महास्वामिनि त्वदभ्युपगतेश्वरे भोक्तृत्वापरिहारात्। इन्द्रियाधिष्ठात्रीणां देवतानामपि भोक्तृत्व एकस्मिञ्शरीरे नानाभोक्तृप्रसक्त्या "बहुवृकाकृष्टमृगन्यायेन" कदाचिच्छरीरस्योन्मथनापत्तेरिति।

व्या०—विजानन्ति देवा एव तद्विजानन्ति देवानां ह्येतद्भवति स्वामी हि फलमश्नुते नास्वामी कर्म कुर्वाणः " इति माध्यंदिनायनश्रुतेश्च । ततश्चैकैकेन्द्रियस्य बहवो देवाः स्वामिन इति तेषां तत्र स्वातन्त्र्यविज्ञानादितारतम्यानुसारेण फलतारतम्यं भवति । लोकेऽपि हि यस्याधिकं क्षेत्रे स्वातन्त्र्यं यस्य वापादिकर्मणि ज्ञानप्रयत्नाधिक्यं तस्य तत्फलमधिकं दृश्यते—इति प्राप्ते राद्धान्तः—अयजमानानामपि ऋत्विजां सत्रयागफलमिवास्वामिनामपि कर्तॄणां फलमुपपद्यते । ननु सत्रेष्वस्वामिनामपि ऋत्विजामगृहीतदक्षिणत्वेन कर्तृत्वाद्भाव्यं फलेनेतिचेत्तर्हि प्रजार्थमेव देवैर्ज्ञानकर्मणोः क्रियमाणत्वात्तासामपि भाव्यं फलेन । ननु यदि ज्ञानादिकं प्रजार्थं देवैः संपाद्यते, तर्हि कृत्स्नफलं प्रजानामेव स्यान्न किंचिद्देवानामिति चेद्यथा राज्ञा प्रजार्थमेव क्रियमाणस्यापि पालनस्य फलं प्रजापते राज्ञ एव मुख्यं प्रजानां तु तत्सहकारिमात्रत्वादल्पम् । यथा च गुरुणा शिष्यार्थमेव क्रियमाणस्यापि व्याख्यानस्य फलं गुरोरेव मुख्यं, शिष्याणां त्वल्पम् । तथा ज्ञानादिप्रवृत्तैर्देवैः प्रजार्थमेव क्रियमाणस्यापि ज्ञानादेः फलं देवानामेव मुख्यं प्रजानामल्पमित्युचितत्वात् । अल्पफलत्वादेव प्रजानामफलत्वश्रुतिः, अल्पधने निर्धनत्वव्यवहारदर्शनादिति " ।

अत्राधिकरणे यद्यपि समान्नविद्योपासनाप्रतिभगवद्दत्तमिन्द्रियतत्फलेष्ववान्तरस्वामित्वमिन्द्रियप्रेरकाणां देवानामङ्गीकृतं, तथाऽपि लोके तत्तदिन्द्रियतत्तत्फलस्वामित्वेनाभिमतानां मनुष्यादीनां तत्र नास्ति स्वामित्वमिति स्पष्टमेव व्यवहृतम् । पूर्वपक्षे बहूनां देवानां स्वामित्वतारतम्यानुसारेण फलतारतम्यमुक्त्वाऽपि कर्तुः फलप्रतिषेधात् । सिद्धान्ते पूर्वपक्षाभिमतं कर्तुः सर्वदेवास्वामित्वमङ्गीकृत्यैव राजगुरुस्वामिकपालनव्याख्यानास्वामिनामपि प्रजाशिष्याणामिव ज्ञानकर्मास्वामिनां मनुष्यादीनामपि किंचित्फलमिति तेषां फलोपपादनाच्च । यद्यपि सत्रेषु यजमाना एव ऋत्विजः "ये यजमानास्त ऋत्विजः " इति तत्र यजमानानामृत्विक्कार्येऽपि विधानात् । तथाऽपि स्वमते यजमाना न भवन्तीत्यभिमानेन वा तथैव

टि०— १ अभिमानेनेति । अनेकत्र मीमांसोल्लङ्घनवदेतस्यापि तथात्वादिति भावः । अत्र कश्चित् " अयजमानत्वास्वामित्वोक्तिः स्वतन्त्रयजमानत्वस्वामित्वनिराकरणपरा । न हि सत्र ऋत्विजां सर्वथा यजमानभावानभिज्ञोऽस्मदाचार्यः । "ये यजमानास्ते ऋत्विजः" इति यजमानानामेव ऋत्विक्कार्ये विधानात् " इत्याह । तत्तु बालभाषितम् । स्वतन्त्रपरतन्त्रयजमानत्वस्वामित्वकल्पनाया निर्मूलत्वात् । न हि मीमांसायां स्वामित्वयजमानत्वयोर्गौणत्वमुख्यत्वे व्यवह्रते येन तथोच्यतेति कृतं पल्लवितेन ।

व्या०–मीमांसकमर्यादेत्यभिमानेन वा तथोक्तम्। दृश्यते हि त्वद्भाष्यानुव्याख्यान-तत्त्वप्रकाशिकान्यायसुधासु मीमांसकमर्यादोल्लङ्घनेन व्यवहारस्तन्मतमित्यन्यथानुवादश्च । तथा हि–" द्वादशाहवदुभयविधं बादरायणः " ( ब्र० सू० ४।४। १२ ) इति सूत्रे भाष्यम् "द्वादशाहः क्रत्वात्मकः सत्रात्मकश्च भवति" इति । " प्रदानवदेव हि तदुक्तं " ब्र० सू० ३ । ३ । ४४ ) इति सूत्रे श्रवणगुरुप्रदानयोः प्रधानेतिकर्तव्यतारूपयोर्गुरुप्रदानं प्रबलमित्युपपादनार्थं तत्त्वप्रकाशिका " न चेतिकर्तव्यतात्वेन दौर्बल्यं, याज्ञीयहिंसायामितिकर्तव्यताया एव प्राबल्यदर्शनात् " इति । " भूम्नः क्रतुवज्जायस्त्वं तथा हि दर्शयति " ( ब्र० सू० ३ । ३ । ५९ ) इति सूत्रे " भूमैव देवः परमो ह्युपास्यः । नैवाभूमा फलमेषां विधत्ते । तस्माद्भूमा गुणतो वै विशिष्टो यथाक्रतः कर्ममध्ये विशिष्टः " इति भाष्योदाहृतश्रुत्यभिप्रायकथनार्थं तत्त्वप्रकाशिका " यथा खलु दीक्षणीयाप्रायणीयोदयनीयासवनत्रयावभृथात्मकस्य क्रतोः सर्वयागेष्वनुवर्तन एव साफल्यात् , अन्यथा वैफल्यात्, ज्यायस्त्वं, ततश्च सर्वैः कर्तव्यत्वं, तथा भूमत्वस्यापि सर्वत्राऽऽनन्दादिषु सहभावेनोपासन एवेष्टसिद्धिरिति " । " जिज्ञासा सूत्रे " ( ब्र० सू० १।१।१ ) च प्रथममसंहितयोङ्कारनिर्देशं सूत्रावयवभूतमङ्गीकृत्यासंहिताप्रयोजनमुत्तरसूत्रेष्वप्यनुगतिसूचनमिति व्युत्पादनार्थं न्यायसुधा " सर्वाणि सूत्राणि प्रत्येकमनेकवेदवाक्यविचारपरत्वादवान्तरा ब्रह्मविद्याः । ' स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यते ' इति श्रौतार्थवादसामर्थ्यात् । सर्वास्वपि ब्रह्मविद्यास्वाद्यन्तयोरोंकारस्योहः कर्तव्य इति गम्यते । न चोह्यमानं वाक्यात्पृथगिति शक्यते वक्तुम् । मन्त्रेष्वप्यूह्यमानस्य

टि०– १ त्वद्भाष्येति । यत्त्वत्र " जीवतः कवेराशयो वर्णनीयः " इति न्यायेन सांप्रदायिकार्थो हि ग्राह्यः । सांप्रदायिभिश्चावान्तरयजमानत्वाविरोधेनैवायजमानशब्दार्थस्य प्रदर्शितत्वात् । भाष्यादौ मीमांसकमर्यादोल्लङ्घनमित्युक्तेरज्ञानमात्रमूलत्वात् । भाष्यगतक्रतुशब्दो लक्षणयाऽहीनपरः । शास्त्रकाराणां तत्र तत्रैवं व्यवहारः दृश्यते हि । द्वादशाहस्य प्रशस्तकर्मत्वज्ञापनायाहीनपदं विहाय क्रतुशब्देन व्यवहार इत्यपि सुवचत्वाच्च " इति विजृम्भणम् । तदपि न क्षोदक्षमम् । यजमानद्वैविध्यस्य मीमांसाविरुद्धत्वस्योक्तत्वेनोक्तार्थस्यासांप्रदायिकत्वात् । क्रतुशब्दस्योभयसाधारणस्यैकमात्रपरत्वव्यवहारस्यायुक्तत्वात् । लक्षणया तच्छास्त्रे यत्र कुत्रचिद्व्यवहारेऽपि तद्बहिस्त्वदीयभाष्यादौ स्वायत्ते शब्दप्रयोगे तदनौचित्यात् । तत्तदसाधारणशब्दाप्रयोगस्यावाचकशब्दप्रयोगस्य च तच्छास्त्रापरिज्ञानमूलत्वात् । अहीनत्वव्यवहारेणासिद्धस्य प्राशस्त्यस्य क्रतुशब्देनासिद्धेः । अपि च शास्त्रकृतां विशेषवाचकशब्दस्य सामान्ये प्रयोगः सम्मतः, न तु सामान्यस्य विशेषे प्रयोगः । तस्य त्वद्भाष्यादावेव दर्शनादिति ।

व्या०—मन्त्रानवयवत्वप्रसङ्गात्" इति । "आनन्दमयाधिकरणे च (ब्र०सू० १।१।१२) न्यायसुधा—"ज्योतिषां सोमो हि ज्योतिष्टोमः" इति ।

अत्र सर्वत्र मीमांसानुरोधिव्यवहारो न भवतीति तद्विदां सुविदितमेव। अहीनसत्ररूपेण ह्युभयविधो द्वादशाहः, न तु क्रतुसत्ररूपेण। क्रतुत्वस्योभयसाधारणत्वात्। याज्ञीयहिंसायामितिकर्तव्यताप्राबल्यं दृष्टमित्यत्यन्तमेव निरालम्बनम् । दीक्षणीयादिसकलाङ्गसहितः क्रतुः सर्वयागेष्वनुवर्तत इत्यपूर्वो व्यवहारः।दीक्षणीयादिज्योतिष्टोमेतिकर्तव्यताकलाप एव हि तद्विकृतिभूतेषु विश्वजिदादिष्वतिदिश्यते, न ज्योतिष्टोमक्रतुरपि, न वा सर्वयागेषु । न चेतिकर्तव्यताकलापः क्रतुरिति व्यवह्रियते।न च ज्योतिष्टोमेतिकर्तव्यताकलापस्य तद्विकृतिष्वतिदेशेन किमपि ज्यायस्त्वं, ऐष्टिकेतिकर्तव्यताकलापस्यापि तत्तद्विकृतिष्वतिदेशेन साम्यात् । न चानतिदेशात्स्वप्रधानाज्ज्यायस्त्वं विवक्षितं, विरोधात् । नह्यमात्यादीनपि सेवमानो भटवर्गस्तानसेवमानाद्राज्ञो भवति ज्यायान्।नाप्यर्थलोपादिनाऽनतिदेश्यादङ्गान्तराज्ज्या-

टि०— १ निरालम्बनमिति । अत्राऽऽह । तत्र प्राबल्योक्तिरङ्गवैकल्येऽपि प्रधानभूतनित्याद्यनुष्ठाने फलसिद्धिदर्शनेन गुरुप्रदानस्य पशुनियोजनादेश्च वैकल्येऽपि श्रवणफलं पशुयागफलं च स्यादित्याशङ्कानिराकरणाय प्रधानवदेवाङ्गमप्यवश्यानुष्ठेयमित्येवंपरा " इति । तदपि महाप्रवाहनीयमानस्य मुग्धस्य तत्रत्यकाशावलम्बनमिव, इतिकर्तव्यतायाः प्राबल्यदर्शनादित्यनेनावश्यमनुष्ठेयमित्यर्थास्फूर्तेः । प्रत्युत मीमांसाविरुद्धार्थस्यैव झटिति स्फुरणात् । अङ्गवैकल्येन नित्यकर्मणि प्रत्यवायाभावेऽपि काम्ये कर्माणि फलासिद्धेश्च । प्रधानभूतनित्याद्यनुष्ठाने फलसिद्धिदर्शनेनेत्युक्तिरपि मीमांसाविरुद्धा । तंत्र नित्यस्य फलानभ्युपगमात्। एतेन"भूम्नः क्रतुवज्ज्यायस्त्वम्" (ब्र० सू० ३।३।६९) इत्यधिकरणेऽपि न मीमांसामर्यादोल्लङ्घनम्। तत्र ज्योतिष्टोमेतिकर्तव्यताभूतदीक्षणीयाद्यङ्गकलापस्यैव विशिष्टक्रतुशब्देन विवक्षितत्वात् । सर्वयागशब्दस्यापि ज्योतिष्टोमविकृतिभूतविश्वजिदादिसर्वयागपरत्वात्तत्तद्विकृतियागसाद्गुण्यापादकत्वेन तस्य ज्यायस्त्वमिति युक्त्युपपत्तेश्च । तावताऽपि विकृतीनां प्राधान्यप्रयुक्तज्यायस्त्वानपायात् । न च क्रतोरिति न वक्तव्यम्, ऐष्टिकादीतिकर्तव्यताकलापस्यापि तत्तद्विकृतिष्वतिदेशादिति युक्तम्। तेन लक्षणया तस्यापि ग्रहणसंभवात्" इति परास्तम् । मीमांसाशास्त्रभिन्नत्वदीयभाष्यादिषु प्रयुक्तशब्दस्य मीमांसापेक्षितार्थबोधकत्वकल्पनस्य मीमांसाशास्त्राज्ञानसूचकत्वात् । इतिकर्तव्यताकलापे क्रतुशब्दस्य शास्त्रज्ञाप्रयुक्तेः । इष्टिसूक्तकलापाननुवर्तनात् । सर्वयागशब्दस्य ज्योतिष्टोमविकारपरत्वे लक्षणापत्तेः । प्रकृतिधर्मातिदेशेन विकृतेर्ज्यायस्त्वस्य कस्याप्यसंभवाच्च । यदपि " ऊहशब्दो न नावमिकोहपरः, किंत्वध्याहारमात्रपरः" इति । तदपि हेयमेव । पूर्वोत्तरयोरश्रुतस्यापेक्षितार्थबोधकस्य पदस्य संबन्धो ह्यध्याहारः । पूर्वश्रुतस्य तु संबन्धोऽनुषङ्गः । तमनुक्त्वा मीमांसकोक्तोहस्यैवोक्तत्वेन प्रकृते तस्यासंभवेनासङ्गतेः । अधिकं तु मूलत एवावगन्तव्यमिति कृतं मृतमारणेनेति दिक् ।

व्या०—यस्त्वं, दीक्षणीयादेरपि मैधातवीयमत्वाम्नानादिनाऽश्वमेधादिष्वनातिदेशात्। न चोंकारस्योत्तरसूत्रेष्वनुगतिरूहः, देवस्य त्वेत्यादिमन्त्रेषु सूर्यादिशब्देऽग्निशब्दादेरिव कस्यचित्स्थानिनः शब्दस्याभावात्। न च ज्योतिषां स्तोम इति ज्योतिष्टोमनामनिर्वचनं, किं तर्हि " त्रिवृत्पञ्चदशः सप्तदश एकविंश एतानि वा ज्योतींषि य एतस्य स्तोमाः " इति वाक्यशेषदर्शितं ज्योतिर्नामकाः स्तोमा यस्येति तन्निर्वचनं मीमांसकसंमतम्। नचैवमुदाहृतेष्वन्यथालिखितस्थलेषु क्रत्वादिशब्दानामहीनत्वादिलक्षकत्वेन प्रसिद्धमीमांसानुसारित्वसमर्थनं युक्तं; तत्तच्छास्त्रानुरोधिनां क्वाचित्के खल्वन्यथाभावे प्रतीयमाने तथा समर्थनं क्रियते। इह तु खण्डभाष्यकारटीकाकाराभ्यां यावन्मीमांसागन्धि लिखितं तत्सर्वमन्यथाभूतमिति कथं तथा समर्थनं क्रियते। एवं तावन्मीमांसकमर्यादोल्लङ्घनेन व्यवहार उदाहृतः। तन्मतमित्यन्यथानुवादो यथा—" अङ्गीकृतत्वादपि तैः पदार्थानां पृथक् पृथक्। क्रियापदेनान्वयस्य वाक्यभेदो न दूषणम् " इति। " सत्यज्ञानादिवाक्येषु ब्रह्मानुवादेन सत्यताद्यनेकविधाने वाक्यभेदः स्यादिति शङ्कां "पृथगेव च वाक्यत्वं पृथगन्वयतो भवेत्। अवान्तरत्वाद्वाक्यानां वाक्यभेदो न दूषणम् " इत्यभ्युपगमेन परिहृत्य मीमांसकमतेऽपीदं समानमित्यनेन श्लोकेनोच्यत इति न्यायसुधायां व्याख्यातम्, तैर्मीमांसकैरपि "अरुणयैकहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाति" इत्यादावरुणादिपदानां क्रियापदेन पृथक् पृथगन्वयस्याङ्गीकृतत्वात्तेषामपि हि वाक्यभेददूषणं प्रसज्येत। तत्रैतावदेव वक्तव्यं, महावाक्यभेद एव दूषणं नत्ववान्तरवाक्यभेद इति। तच्चास्माकमपि समानम् " इति। न च प्रसिद्धमीमांसकमते तत्रावान्तरवाक्यभेदोऽस्ति, क्रयभावनाविधेयत्वेन "अप्राप्ते तु विधीयेरन्बहवोऽप्येकयत्नतः" इत्युक्तरीत्याऽऽरुण्यादिविशिष्टक्रयभावनादिरूपक्रियैक्येन पदैक्यवाक्यताया एव स्वीकृतत्वात्। एवमन्यत्रापि द्रष्टव्यम्। विस्तरभयादुपरम्यते। एवं च सत्रऋत्विग्दृष्टान्तकरणात्कर्तॄणामपि ज्ञानकर्मस्वामित्वमभिमतमिति न भ्रमितव्यम्। स्यादेत्—यदि जीवस्य दुःखादिस्वामित्वं न स्यात्, तदा तस्य दुःखाद्याश्रयत्वस्याप्यभावादहं दुःखीत्यादिप्रत्ययानामध्यासात्मकत्वमङ्गीकर्तव्यं स्यात्, न चैतदङ्गीकर्तुं युक्तम्। " मिथ्यात्वमपि बन्धस्य न प्रत्यक्षविरोधतः। मिथ्यात्वं यदि दुःखादेस्तद्वाक्यव्यग्रतो भवेत्। मिथ्यायाः साधकत्वं च न सिद्धं प्रतिवादिनः। " इत्याद्यनुव्याख्याने "बन्धमिथ्यात्वस्य प्रत्यक्षविरोधेन, यदि श्रुतिवाक्याद्बन्धस्य मिथ्यात्वं तदा तस्यापि वाक्यस्य तत एव मिथ्यात्वं भवेत्।

व्या०–वाक्यस्य सर्वमिथ्यात्वबोधकत्वात् । ततश्च तस्य मिथ्यात्वसाधकत्वं न स्यात् । मिथ्याभूतस्य साधकतायाः प्रतिवाद्यसंमतत्वात् " इति युक्त्या च निराकृतत्वात् । अनुव्याख्यान एव सुखादिग्राहकसाक्षिणो निर्दोषत्वादिना याथार्थ्यनियमस्य प्रतिपादितत्वाच्च । अस्मिन्नपि ग्रन्थे पूर्वपक्षनिराकरणोपयोगितया तस्यार्थस्य " साक्षी जीवः सुखादीन्यनिशमनुभवन्सर्वमानाधिकस्ते" ( श्लो० ६) इत्यनूदितत्वाच्च । तस्मादहं दुःखीत्याद्यनुभवनिर्वाहाय जीवस्य दुःखादिस्वामित्वमस्तीत्येव मन्मतम् । किंतु तत्स्वामित्वमीश्वरदत्तमपकृष्टमित्येव विशेषः । अत एव 'सांख्याधिकरणा( ब्र० सू० २।२।२)नुव्याख्याने ' द्वैविध्येऽपि तु कामादेः कुतः स्वामित्वमात्मनः । साक्षादनुभवारूढं शक्यतेऽपोदितुं क्वचित् ' इति कामादौ स्वामित्वस्याप्रत्याख्येयत्वमुक्त्वा तदनन्तरश्लोके तस्यापकृष्टत्वमप्युक्तम् । न्यायसुधायां चात्यन्तवश्यत्वरहितगवादिस्वामित्वदृष्टान्तेन तस्यापकर्षः समर्थितः । तस्मादीश्वरस्यैव दुःखादिस्वामित्वं न जीवस्येत्युक्तं युक्तमिति चेदुच्यते । त्वन्मतेऽपि दुःखित्वाद्यनुभवोऽध्यासरूप एव । उक्तं च " आनन्दमयाधिकरणे " ( ब्र० सू० १ । १ । १२ ) त्वद्भाष्ये ' प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यते । मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः " इति भागवत इति हि । तत्त्वप्रकाशिकायां च " विमुक्तश्च विमुच्यते " इति संसारिणोऽपि विमुक्तत्वश्रवणात्तदन्यथानुपपत्त्या तस्य परब्रह्मत्वसिद्धेस्तद्विरोधो भेदव्यपदेशस्येति शङ्का-

---

टि०– १ अपोदितुमिति । अयमसाधुः प्रयोग इति पूर्वमेव प्रदर्शितम् ।

२ अध्यासरूप एवेति । कथमन्यथाऽन्तःकरणधर्माणां दुःखादीनामात्मन्यन्तःकरणाध्यासासिद्धौ तत्र प्रतीतिः स्यात् । प्रमादात्मकत्वादित्यादिभागवतवाक्येन तस्याध्यासरूपत्वसिद्धेश्चेति तात्पर्यम् । ननूक्तं " अस्मन्मते दुःखादीनामात्मीयत्वेन नाध्यासत्वं, अन्तःकरणपरिणामभूतानामपि तेषामात्मधर्मत्वस्यानपायात् । इयांस्तु विशेषः, दुःखादयो धर्माः स्वातन्त्र्यगर्भात्मसंबन्धित्वेन संबद्धाः " इति । तद्गर्भस्रावेणैव गतम् । अन्यधर्मस्यान्यत्र स्वातन्त्र्येण प्रसृतावीश्वरस्यैव सर्वस्वातन्त्र्येण सर्वदुःखभोक्तृत्वं स्यात् । न चाविद्यावत एवोक्तधर्मसंबन्ध इति वाच्यम् । अविद्यानिवृत्तौ तन्निवृत्त्यवश्यंभावेन स्वातन्त्र्योक्तेराकिंचित्करत्वात् । न चानादिभावस्य निवृत्तिर्न युक्तेति वाच्यम् । त्वन्मतेऽपि तथाऽभ्युपगमेनादोषात् । अन्यथाऽविद्यावृतानन्दस्याभिव्यक्त्यभावेन मुक्त्यनुपपत्तेः । न च त्वया दृष्टान्तानुसारेणाविद्यानिवृत्तिरभ्युपगम्यते मया तु शास्त्रानुसारेणेति प्रलपितव्यम् । मयाऽपि " तमेव विदित्वाऽतिमृत्युमेति " ( श्वे० ६।१५ ) इति शास्त्रानुसारेणैवाविद्यानिवृत्त्यभ्युपगमेन तथोक्तेर्बालभाषितत्वात् । दृष्टान्तः परं सुखावबोधार्थमभ्युच्चयमात्र इति ।

व्या०—निराकरणार्थत्वेनोदाहृतं भाष्यग्रन्थमवतार्य तस्यार्थो वर्णितः। जीवस्य परब्रह्मत्वाभावेऽपि विमुक्तत्वोक्तिर्युज्यते। बन्धस्याज्ञानमूलत्वेनास्वाभाविकत्वात्" इति। यत्त्वनुव्याख्याने बन्धस्याध्यासात्मकत्वनिरसनं, तस्याभिप्रायस्तु तद्व्याख्यानानन्तरं न्यायसुधायाम्—"अत्र तत्त्वविदो वदन्ति—सर्वो हि बन्धो बुद्धीन्द्रियशरीरविषयतद्धर्मलक्षणोऽस्माभिरप्यात्मन्यारोपित एवेत्यङ्गी क्रियते। यथोक्तं भाष्यकृता—"प्रमादात्मकत्वाद्बन्धस्य" इति। अतः किंनिबन्धनो बन्धमिथ्यात्वनिरासनिर्बन्ध इत्याशङ्कां कृत्वा सत्यं तथाऽप्यस्त्यत्र दर्शनभेद इति तत्परिहारमारभ्य बुद्धीन्द्रियशरीरविषयाः स्वरूपेण सन्त एवेश्वरपरवशा अनाद्यविद्यावशादात्मयितयाऽध्यस्यन्ते। तांश्चाऽऽत्मनो विभक्तानपि विस्पष्टं तथाऽनुपलभमानस्तद्धर्मान्दुःखादीन्सत्यानेवाऽऽत्मीयत्वेनापश्यंस्तत्कृते नीचोच्चत्वलक्षणे विकृती सत्य एव प्रतिपद्यते" इत्यादिवाक्यैः स्वमतास्थितिप्रतिपादनेन "मायावादिनस्तु दुःखादिकं स्वरूपेणापि मिथ्येति मन्यन्ते" अतस्तन्निराकरणे निर्बन्धो युक्त एवेत्येतत्परिभावयितुं बन्धमिथ्यात्वमिति संमुग्धे प्रस्तुते दुःखादेरिति निष्कृष्योक्तम्" इत्यद्वैतमते निर्वार्यार्थांशनिष्कर्षेण स्पष्टीकृतः। यत्तु साक्षिणो याथार्थ्यनियमान्न साक्षिरूपस्य दुःखित्वाद्यनुभवस्याध्यासत्वं संभवतीति, तदयुक्तम्। परमेश्वरतन्त्रस्य जीवस्य स्वातन्त्र्यग्रहणे प्रमाणाप्रमाणज्ञानयोरप्रामाण्यप्रामाण्यग्रहणे च तस्य याथार्थ्यपरित्यागात्। यदि तु "मानसे दर्शने दोषाः स्युर्न वै साक्षिदर्शने" इति। "यत्किंचिद्व्यभिचारि स्याद्दर्शनं मानसं हि तत्" इति चानुव्याख्यानदर्शनात्स्वातन्त्र्यग्रहणं मनोवृत्तिरूपं, न तु साक्ष्यनुभवरूपमितीष्यते, तदा दुःखित्वाद्यनुभवोऽपि त्वत्सिद्धान्तासिद्धाध्यासत्वनिर्वाहाय मनोवृत्तिरूप एव त्वयेष्टव्यः स्यात्। यदि चैवं सति दुःखाद्यंशेऽपि मनोवृत्तिविषयतैव स्याद् दुःखित्वाद्यनुभवव्यतिरेकेण दुःखादिमात्रविषयानुभवाभावात्। ततश्च दुःखादेस्त्वदभिमतं साक्षिविषयत्वं न सिध्येदित्यनुशयः, तदा दुःखित्वाद्यनुभवरूपसाक्षिण आत्मीयत्वांशेऽध्यासरूपत्वमकामेनापि त्वयेष्टव्यम्। त्वयाऽपि हि सर्वेषां साक्ष्यनुभवस्य याथार्थ्यनियमो नेष्यते। असुराणां साक्षिणो याथार्थ्याभावस्य मनुष्याणां साक्षिणो मिश्रत्वस्य चाङ्गीकृतत्वात्। तस्मात्त्वन्मते दुःखादीनामन्तःकरणपरिणामतया जीवस्य दुःखाद्याश्रयत्वाभावेन "ज्योतिराद्यधिष्ठानं तु तदामननात्"(ब्र० सू० २। ४। १५) "स्वामिनः फलश्रुतेरित्यात्रेयः"(ब्र० सू० ३। ४। ४४) इत्यधिकरणयोस्तस्येन्द्रियतत्फलस्वामित्वस्य प्रतिषिद्धतया दुःखादिस्वामित्वाभावेन चाहं दुःखीत्यादिप्रत्ययानां कथंचिदपि

स्वामित्वे न स्पृशन्तीत्यपि न तव मते तत्परस्यैव हीष्टं
तस्मात्तस्याखिलान्तःकरणगणपतेर्जीवतैवार्थनीया ॥ २५ ॥

---

व्या०—याथार्थ्यासंभवात् । त्वद्भाष्यटीकयोर्बन्धस्याध्यासात्मकत्वप्रतिपादनात् । स्वपरसिद्धान्तविशेषाविष्करणपरन्यायसुधाग्रन्थे "मम शरीरं, म इन्द्रियाणि, मम मनोऽहं दुःखीत्यादिप्रत्ययानां शरीरेन्द्रियदुःखादिषु भासमान आत्मीयांश एवाऽऽरोपितविषयता, न तु शरीरादिस्वरूपेऽपि" इति स्वमतनिष्कर्षात् । साक्षिणो याथार्थ्यनियमाभावाच्च । त्वत्सिद्धान्ते तेषां सुनिश्चितेऽध्यासरूपत्वे यदन्यत्र प्रपञ्चमिथ्यात्वनिराकरणप्रस्तावे "सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितम् । साक्षिसिद्धस्य न क्वापि बाध्यत्वं तददोषतः" इत्यादि साक्षिणो याथार्थ्यनियमकथनम् । यच्च सांख्यमतदूषणप्रस्ताव आत्मनः कामादिस्वामित्वकथनं, न तत्र त्वयाऽभिनिवेष्टव्यं किंतु परमतदूषणलोभेन तद्दुराग्रहकृतमौढ्येन वा स्वसिद्धान्तविरुद्धभाषिणः स्वीया इत्येव शोचनीयाः । याननुसृत्याद्यतना अपि त्वदीयाः परमतसिद्धाविद्यादूषणादिप्रस्तावेष्वनादिभावस्य निवर्त्यत्वं न युक्तमित्यादि स्वसिद्धान्तविरुद्धमेव जल्पन्ति । त्वन्मतेऽपि ह्यनादिभावरूपैवाविद्या ज्ञाननिवर्त्या च । तस्माज्जीवे दुःखित्वादिप्रत्ययानां त्वन्मतेऽप्यध्यासरूपत्वात्स्वस्वान्तःकरणगतदुःखादिस्वामित्वाद्यध्यासमात्रदुष्टाज्जीवभावाद्वास्तवसकलदुःखविकलजीवान्तःकरणगतानिखिलदुःखादिस्वामित्वानुभवनिरन्तराकलितस्त्वन्मतसिद्धपरमेश्वरभाव एव पापीयानिति कथं त्वदीयः परमेश्वरो जीवभावं नार्थयेत । अतो न तस्य जीवभावाननुमतिशङ्कावकाश इति भावः ॥ २५ ॥

---

टि०— १ विरुद्धभाषिण इति । अत्र कश्चिदाह—त्वदीयानामेवात्यन्तविरुद्धभाषित्वम् । तथा हि—"आत्मैकत्वविद्याप्रतिपत्तये" इति भाष्यकारेण प्रत्यग्ब्रह्मैक्यं विषय इत्युक्तं, भामत्यां च ब्रह्मण एव शास्त्रविषयत्वमुक्तमिति विरोधः । एवं भाष्यकारेणैव समन्वयाधिकरणे वेदान्तेषु विधिं निराकृत्य सहकार्यन्तरविधिरिति सूत्रे विधिरङ्गीकृतः । एवमन्याऽपि" इति । तदपि मन्दम् । भामतीस्थब्रह्मशब्दस्य प्रत्यग्ब्रह्मैक्यपरत्वात् । न हि भामतीकृन्मते जीवब्रह्मणोर्भेदोऽस्ति, येन तन्मतं भाष्याविरुद्धं भवेत् । ज्ञाने विधिर्निराकृता, स्वीकृता च श्रवणरूपक्रियायामिति न भाष्येऽपि पूर्वापरविरोधः । उक्तं च वार्तिके "श्रवणादिक्रिया तावत्कर्तव्येह प्रयत्नतः" ( बृ० वा० २ । ४ । २१८ ) इति । तस्मात्त्वन्मतरीत्या सर्वदुःखस्वामिनो जगदीशितुर्जीवभावाभ्युपगमे न कोऽपि प्रत्यवाय इति दिक् ॥२५॥

दुःखित्वाद्येव हेयं न यदि कथय तत्किं नु बन्धेषु हेयं
नीचत्वं तत्प्रयुक्तं यदि तदिदमिति व्याकुरुष्व स्फुटोक्त्या ।
यच्चाऽऽक्रन्दादि दुःखाद्युतितनयहतं नापि सार्वत्रिकं त-
द्यत्किंचित्तस्य कार्यं यदि तदिह जगद्व्यापृते नित्यसिद्धम् ॥२६॥

व्या०—स्यादेतत् । दुःखस्वामित्वादिरूपदुःखित्वादिकं न हेयं, येन परमेश्वरस्यापि हेयसंबन्धः स्यात् । किंतु दुःखित्वादिप्रयुक्तनीचत्वम् । न च तत्परमेश्वरेऽस्तीत्याशङ्कामुद्भाव्य परिहरति—दुःखित्वादीति । यदि "तत्रापि च तद्व्यापारादविरोधः" ( ब्र० सू० ३।१।१६ ) इत्यधिकरणे त्वद्भाष्योदाहृतं "नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते । नीचोच्चताभिर्दुःखादेर्भोग इत्यनुमीयते । नासौ नीचोच्चतां याति पश्यत्येव सदा प्रभुः" इति वचनमालम्ब्य दुःखादिप्रयुक्तं नीचत्वमेव दुःखादिभोक्तृत्वं हेयमित्युच्यते । तर्हि किं तन्नीचत्वमिति प्रश्ने विवरणीयं त्वया । दुःखहेतुकमाक्रन्दादिकमिति चेत्तदपि दुःखादिषु दर्शितेनैव न्यायेन निरस्तम् । तदपि हि शरीरेन्द्रियविकाररूपत्वादाश्रयाश्रयिभावेन जीवं न स्पृशतीति । किंच न तत्सार्वत्रिकं, लोके हि मानी धीरोदात्तस्तापसादिश्च महति दुःखेऽपि नाऽऽक्रदन्ति, न रोदिति, न चान्यं कमपि देहेन्द्रियविकारमापद्यते । न वा तदपनयनार्थमितरप्रार्थनादैन्यमवलम्बत इति तस्य तद्दुःखं हेयं न स्यात् । कापालिकादिश्च भिक्षुकः स्वाङ्गच्छेदककण्टककर्दमतप्तवालुकाशयनादिभिर्महद्दुःखमनुभवन्नपि न तत्प्रयुक्तं नैच्यमनुभवति, किंतु याचनाप्रयुक्तमिति तस्यापि तद्दुःखं हेयं न स्यात् । अथोच्येत—' नायमसार्वत्रिकदोषो भवति, यावत्किंचिद्दुःखादिकार्यं तत्सर्वं नैच्यमित्यङ्गीकारात् । धीरादीनामपि दुःखानुभवप्रसक्तविकारविरोधप्रयत्नतदपनोदनोपायचिन्तनादियत्किंचित्कार्यमस्ति ' इति । नैतदपि युक्तम् । [1]परमेश्वरेऽपि नानाविधजगद्व्यापारस्य दुःखादिप्रयुक्ततया कल्प-

---

टि०— १ परमेश्वर इति—सुखकार्यस्य सृष्ट्यादेरिव दुःखस्वामित्वरूपदुःखभोक्तृत्वप्रयुक्तकार्यस्यापि तस्मिन्नपरिहार्यत्वादिति भावः । अत्र "को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" ( तै० उ० २ । ७ ) इति श्रुत्या जगद्व्यापारस्य सुखोद्रेकप्रयुक्तत्वसिद्धावपि दुःखोद्रेकप्रयुक्तत्वे मानाभावः" इति कस्यचिच्चोद्यानवकाशः । "राज्यनाशो वने वासः सीता नष्टा द्विजो हतः । ईदृशीयं ममालक्ष्मीर्निर्दहेदपि पावकम्" ( वा० रा० ३। ६७।२४ ) "न मद्विधो दुष्कृतकर्मकारी" ( वा० रा० ) इत्यादिवचनेन जगद्व्यापारान्तर्गतस्याऽऽक्रन्दादेर्दुःखोद्रेकप्रयुक्तत्वावगमेन प्रमाणाभाववचन-

एवं सुखित्वकृतमेव हि नर्तनादि ग्राह्यं फलं तव भवेन्न सुखित्वमेव।
अस्त्वित्युशन्तमनुभूतिमुपक्षिपन्तं
लोकाः पिशाच इति निश्चिनुयुर्भवन्तम्॥ २७॥

---

व्या०—यितुं शक्यत्वेन तत्र नैच्याभावासिद्धिप्रसङ्गात्। त्वया हि "आनन्दमयाधिकरणे"(ब्र० सू० १।१।१२) "लोके चतुर्विधा पुंसां प्रवृत्तिः—सुखार्था, दुःखनिवृत्त्यर्था, सुखोद्रेकप्रयुक्ता, दुःखोद्रेकप्रयुक्ता चेति। तत्र प्रवृत्तित्रयस्यापि परमेश्वरेऽनुपपन्नत्वात्सुखोद्रेकप्रयुक्तैव लौकिकानां नृत्तादाविव तस्य जगत्सृष्टयादौ प्रवृत्तिरिति निरूपितमिति। तत्तदा शोभते, यदि तस्य दुःखित्वं न स्यात्। तत्सत्त्वे तु केचन जगद्व्यापारा दुःखोद्रेकप्रयुक्ताः कुतो न स्युः। तथात्वे पुनरपि दुःखोद्रेकहेतुं जगद्व्यापारं न कुर्यादिति चेद् भ्रान्तोऽसि। न हि दुःखोद्रेकाद्रोदनादौ प्रवृत्तिरभिसंधिपूर्विका तन्निवृत्त्यर्था। प्रत्युत शिरोक्षिरोगादिदुःखोद्रेकात्पुनरपि तदुद्रेकहेतव एवाऽऽक्रन्दाशिरस्ताडनाश्रुविमोचनादिप्रवृत्तयो दृश्यन्ते। परमेश्वरस्य दुःखित्वादेः श्रुतिविरुद्धत्वात्तद्व्यापाराणां तत्प्रयुक्तता कल्पयितुं न शक्यत इति परिशेषासिद्धिरिति चेत्सत्यम्। तस्य दुःखित्वादिकं श्रुतिविरुद्धमिति। तथाऽपि त्वन्मतपर्यालोचनया तस्य दुःखादिस्वामित्वरूपं तदापतितमिति पूर्वोक्तं त्वमेव परिभावय। तथाऽपि तत्र दुःखित्वरूपं कार्यं न भवतीति चेन्न। तत्र सुखित्वप्रयुक्तकार्याभ्युपगमे तद्वदेव दुःखित्वसत्त्वे तत्प्रयुक्तकार्यस्यापि दुर्वारत्वात्। यदि तु " आहूतस्याभिषेकाय विसृष्टस्य वनाय च। न मया लक्षितस्तस्य स्वल्पोऽप्याकारविप्लवः" ( वा० रा० ) इत्यादौ धीरोदात्तमहापुरुषगुणत्वे प्रसिद्धामवहित्थां तत्राभ्युपैषि, तर्हि तथा सुखोद्रेकप्रयुक्तमपि कार्यं तत्र न स्यादेव। न चेत्तदितरदपि केन वा वार्यते। किंच दुःखकार्यमात्रस्य हेयत्वोक्तिरयुक्ता। दुःखकार्यस्यापि भगवद्भजनादेः पुरुषार्थताया दृष्टत्वात्। " चतुर्विधा भजन्ते माम् " ( गी० ७।१६ ) इत्यादिशास्त्रसंमतत्वाच्च। तस्माद्दुःखकार्यमाक्रन्दादिमात्रमेव हेयतया वक्तव्यमिति तस्यासार्वत्रिकत्वदोषो युक्त एवेति भावः॥ २६॥

एवं दुःखित्वस्य कार्यमेव हेयं, न दुःखित्वमिति परोक्तमनुसृत्येदमुक्तम्। इदानीं वस्तुतो दुःखित्वमेव हेयं न तत्कार्यमित्यभ्युपपादयति—एवमिति। दुःखकार्यमेव हेयं न दुःखित्वमित्यङ्गीकारे न्यायतौल्यात्सुखकार्यमेवोपादेयं न सुखमिति त्वयाऽङ्गी-

---

टि०—स्य निर्मूलत्वात्। किंचाऽऽक्रन्दनरूपस्यैव दुःखप्रयुक्तनीचत्वस्य संभवेऽप्रसिद्धवृद्ध्यादिरूपेण तन्निर्वचनस्यानुचितत्वात्। तस्मादीश्वरस्य जीवभावो न हेय इति युक्तमुत्पश्यामः॥२६॥

विष्णौ विश्वातिशायिन्यनवधिगुणके जीववर्गाद्विभिन्ने
सर्वश्रुत्यैकमत्यं समरसबलवल्लिङ्गसंगत्युपेयम् ।

व्या०—कर्तव्यं स्यात्। "नन्वस्त्वेवमेव, एवं सति परमेश्वरः शक्तिमत्त्वेऽपि दुःखित्वप्रयुक्तमेव कार्यं नानुरुन्धे। हेयत्वात्। किंतु सुखित्वप्रयुक्तं पुरुषार्थत्वादित्युपपादनं संभवति। "को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यात्" (तै० उ० २ । ७) 'यदा वै सुखं लभतेऽथ करोति नासुखं लब्ध्वा करोति सुखमेव लब्ध्वा करोति" (छा० ७।२२।१) इत्यादिश्रुत्योः प्राणयितृत्वादिरूपः सर्वोऽपि परमेश्वरव्यापारः सुखोद्रेकप्रयुक्त इत्येतत्परतया मदीयग्रन्थे व्याख्यानमपि संगच्छते" इति यद्याशंसेथास्तदा सकलानुभवमर्यादाविरोधस्तावदनिवार्यः। सुखदुःखे हि निरुपाधीच्छाद्वेषविषयतया पुरुषार्थापुरुषार्थरूपे सकलानुभवसिद्धे, न तु तत्कार्ये। एवमनुभवविरोधमप्यविगणय्य सुखदुःखकार्ययोरेव पुरुषार्थापुरुषार्थत्वमभ्युपगम्यते। त्वदभ्युपगमानुसारेण त्वदीयसुखादेः पुरुषार्थपर्यवसायितानिर्वाहाय सुखानुभवकालेषु सर्वेषु यत्किंचिन्नृत्तगीतादिकार्यमारभमाणेनैव त्वया स्थातव्यं स्यात्। तथा च लोकास्त्वां पिशाच इत्येव मन्येरन्। पिशाचजातिर्हि यत्किंचित्संतोषलाभे विकटं नृत्यति गायति चेति प्रसिद्धिः। अतस्तान्त्रिकेण त्वया लोकशास्त्रमर्यादामनुसृत्य सुखदुःखयोरेव पुरुषार्थापुरुषार्थत्वरूपत्वमङ्गीकर्तव्यमिति त्वन्मत ईश्वरो नितान्तहेयसंबन्धाकुलीभूतस्ततो वरमल्पदुःखाध्यासमात्रकलुषितो जीवभाव इति मत्वा पूर्णापूर्णगुणविरोधमचिन्त्याद्भुतया निजशक्त्याऽभिभूय जीवभावमापद्यतैवेति न पूर्णगुणवाचिना ब्रह्मशब्देन जीवाद्भेदसिद्धिरिति भावः ॥ २७ ॥

ननु ब्रह्मशब्देनैव ब्रह्मणो जीवाद्भेदं प्रसाध्य सिद्धान्त इह न क्रियते, किंतु निखिलकल्याणगुणाकरे जीववर्गाद्भिन्ने विश्वातिशायिनि भगवति सर्वासां श्रुतीनामैककण्ठ्यं बलवद्भिः परस्परसंवादरूपसामरस्यशालिभिस्तात्पर्यलिङ्गैरवगम्य तत्तत्तात्पर्यलिङ्गप्रदर्शनेन प्रसाध्य तासामद्वैतेऽत्यन्तवैरस्यं च तत्तन्न्यायैरुपपाद्य सिद्धान्तः क्रियते। ब्रह्मशब्दस्त्वभ्युच्चयमात्रमतो न पूर्वोक्तदोषाणामवकाश इत्याशङ्क्याऽऽह—विष्णाविति। त्वन्मते प्राधान्येन जीवब्रह्मभेदसाधनं

टि०— १ पिशाच इति। लोकमर्यादाननुसरणे यत्किंचित्संतोषेण पिशाचवदतीव नर्तनगानादिकं तव स्यादिति भावः ॥ २७ ॥

अद्वैते च श्रुतीनामधिकविरसतामत्र संसाध्य कुर्याः
सिद्धान्तं चेत्किमश्चेत्फलमुपरि तयोः साधकस्ते नयौघः ॥२८॥

व्या०—'पृथगुपदेशात्' (ब्र०सू० २।३।२८) इत्यधिकरणकृत्यम्। अप्राधान्येन तत्साधनं च किंचित्किंचित् भेदवाक्यमवलम्ब्य तत्र तत्रास्ति । तथा च यद्यत्र सकलाद्वैतश्रुतिप्राबल्यदौर्बल्यचिन्तया सर्वप्रकारेणापि तत्साधनमिहैव क्रियेत, तदा तदधिकरणमन्यत्र तत्र तत्र तत्साधनं च निष्फलं स्यात् । तस्माद-स्मिन्नधिकरणे ब्रह्मशब्देनैव सिद्धान्त इति त्वयाऽङ्गीकरणीयम । अत एवाऽऽ-नन्दमयाधिकरणे—'भेदव्यपदेशाच्च' ( ब्र० सू० १।१।१७ ) इति सूत्रस्य पौनरुक्तिशङ्कानिराकरणार्थं "न जीवभेदसूत्राणां शङ्क्याऽत्र पुनरुक्तता । वाक्यान्तरद्योतकत्वात्पृथगित्यत्र पूर्णता" इत्यनुव्याख्यानश्लोकं व्याचक्षाणेन न्यायसुधाकृतोक्तम् "अत्र शास्त्रे तत्र तत्र प्रकरणे ह्यैक्यविषयतायां चोदि-तायां तत्तद्गतभेदवाक्यद्योतनेन सूत्रेषु भेदसमर्थनं क्रियते । तत्तात्पर्यभेदान्न पुनरुक्तता शङ्क्या । तथा हि—जिज्ञासावाक्येऽभेदशङ्कायां तद्गतब्रह्मशब्देनैव भेदसमर्थनं, जिज्ञास्यस्य ब्रह्मणो जीवत्वे शङ्किते तत्पूर्ववाक्योक्तलक्षणेन भेद-साधनम् । एवमेव "भेदव्यपदेशाच्चान्ये" (ब्र० सू० १।१।२१) इत्यादावपि पुनरुक्ततादोषः परिहरणीय इति । इयांस्तु विशेषः—अन्नमयादिशब्दा विका-रार्थमयट्प्रत्ययानुरोधाज्जीववाचिनः । तेषु ब्रह्मशब्दादिप्रयोगस्तु ब्रह्माभेदवि-वक्षयेति शङ्किते तत्प्रकरणगतेन "स यश्चायं पुरुषे" (तै० उ० २।८) इति भेदव्यपदेशेन प्रत्यवस्थानमित्यादि संगच्छते । इह तु जिज्ञासावाक्य एव जिज्ञास्यब्रह्म निर्विशेषजीवचैतन्यरूपमिति शङ्काहेतोः कस्यचिदभावात् । सर्व-

टि०— १ जिज्ञासावाक्य इति । "तद्विजिज्ञासस्व । तद्ब्रह्म" ( तै० उ० ३ । १ ) इत्यत्रान्यतः सिद्धं ब्रह्मानूद्य विचारविधायके विचार्यं ब्रह्म जीवरूपमिति शङ्काया हेत्वभावे-नानुदये ब्रह्मशब्दस्य गुणपूर्णत्वसमर्थनेन भेदसाधनं निरालम्बनमिति द्योतितो भावः । अत्र केचित्—'जिज्ञास्यं ब्रह्म निर्विशेषजीवचैतन्यरूपमिति शङ्कायामस्ति हेतुः "एकमे-वाद्वितीयम्" ( छा० ६ । २ । १) "अयमात्मा ब्रह्म" ( मा० २) इत्यादिवाक्यजातम् । तस्य जिज्ञासावाक्येऽभावेऽपि तदुपात्तवेदान्तगतत्वेन तत्राप्यभेदशङ्कासंभवात् । जिज्ञा-सावाक्यगतस्यैव ब्रह्मशब्दस्य चेह बृंहकत्वादिकल्पनयोगेनाभेदशङ्काहेतुत्वोपपत्तेश्च । तस्मा-ज्जिज्ञासाधिकरणेऽपि ब्रह्मशब्देन जीवेश्वरयोर्भेदसाधनं युक्तमित्याहुः । तत्र ब्रूमः "एकमे-वाद्वितीयम् ( छा० ६ । २ । १ ) इत्यादिवाक्येषु तादृशप्रतीतिसंभवेऽपि प्रकृतजिज्ञा-सावाक्ये तादृशशङ्कानुदयेन तादृशवाक्यमादाय तदुपपादनस्योद्बक्षरत्वेनातीव साहसमात्र-

अग्रे वाच्योऽपि कस्ते कथय नय इह स्थापको भिन्नताया
जीवेशित्रोर्गुणानां स खलु विषमता सा तु दत्तोत्तरैव ।

व्या०—वेदान्तानामखण्डब्रह्मपरत्वेन सगुणे ब्रह्मणि मानं नास्तीत्येव त्वदीयपूर्वपक्षदर्शनाच्च । सर्ववेदान्तावलम्बनेन पूर्वपक्षे जिज्ञासावाक्यगतेनैकेन ब्रह्मशब्देन प्रत्यवस्थानमपि न संगच्छत इति ॥ २८ ॥

अपि चाग्रे निरूपणीयमपि न्यायजातं न जीवेश्वरयोर्भेदं व्यवस्थापयितुं प्रभवतीत्याह—अग्र इति । इत्थं हि त्वया तत्र तत्र न्याया निरूपिताः । प्रत्यक्षं तावज्जीवस्येश्वराद्भेदे प्रमाणम् । यद्यप्यनवगतेश्वरस्य पुरुषस्य स्वात्मनि तद्भेदो न प्रत्यक्षस्तथाऽपि शास्त्रावगतसर्वज्ञसर्वशक्तिकत्वादिमदीश्वरस्य स्वात्मानं च तद्विरुद्धाल्पज्ञत्वाल्पशक्तिकत्वादिधर्मकं साक्षिणाऽनुभवतः स प्रत्यक्ष एव । "यो हि यमर्थमधिगम्य तद्विरुद्धधर्माणं यमर्थं पश्यति स तस्मात्तस्य भेदं प्रत्यक्षयति" इति सर्वानुभवसिद्धम् । तथा च शास्त्रीयलक्षणज्ञानसाचिव्येन रत्नतत्त्वसाक्षात्कार इव शास्त्रीयेश्वरज्ञानसाचिव्येन स्वात्मनि तद्भेदसाक्षात्कारो नानुपपन्नः । एवं प्रत्यक्षागमावगतेन जीवेश्वरयोर्विरुद्धगुणवत्त्वेन दहनतुहिनवद्भेदोऽनुमातुं शक्यत इत्यनुमानमपि तद्भेदे प्रमाणम् । तथा "भिन्नोऽचिन्त्यः परमो जीवसंघात्पूर्णः परो जीवसंघो ह्यपूर्णः । यतस्त्वसौ नित्यमुक्तो ह्ययं च बद्धो मोक्षं तत एषाभिवाञ्छेत्" इति पूर्णापूर्णत्वादिविरुद्धधर्मवत्त्वोपपत्तिमुखप्रवृत्ता कौशिकश्रुतिरपि तत्र प्रमाणम् । न च श्रुतिर्व्यावहारिकभेदपरा, "एतमन्नमयमात्मानमुपसंक्रम्य" (तै० उ० ३।५) 'निरञ्जनः परमं साम्यमुपैति' (मु० ३।१।३) "प्रज्ञानेत्रो लोकः" (ऐ० उ० ३।३) इत्यादिश्रुतिषु मुक्तावपि प्राप्यप्रापकसादृश्यप्रतियोग्यनुयोगिनेतृनेतव्यत्वादिविरुद्धगुणवर्णनेन तद्भेदसिद्धेः। न चाभेदश्रुतिविरोधादुदाहृतश्रुतीनामन्यथानयनं शङ्क्यम् । सोपपत्तिककौशिकश्रुतिविरोधेनोपजीव्यविरोधेन च दुर्बलानामभेदश्रुतीनामेव गौणाभेदपरत्वौचित्यात् । "तत्त्वमसि" (छा० ६।८।७) इत्याद्यभेदश्रुत्या यदि जीवमनूद्य तस्येश्वरैक्यं बोध्येत, तदाऽल्पज्ञत्वादिधर्मकतया जीवग्राहकं साक्षिप्रत्यक्षमुपजीव्यं

टि०—त्वात् । ब्रह्मशब्देन वल्लसयोगमर्यादामुल्लङ्घ्य कल्पितयोगमर्यादया भेदसाधनस्य प्रामाणिकाध्वपरिपन्थित्वात् । सर्ववेदान्तानामप्यत्रैव भेदतात्पर्यकत्वसाधनेऽधिकरणान्तराणां पौनरुक्त्यस्य वैयर्थ्यस्य वाऽऽपत्तेः । तस्माद्ब्रह्मशब्दस्यैकस्य सर्ववेदान्तप्रतिभटत्वं सर्वथा दुःसंपाद्यमिति विस्तरेण पूर्वमेव निरूपितमित्यलं मृतमारणेन ॥ २८ ॥

व्या०—यदि त्वीश्वरमनूद्य तस्य जीवैक्यं बोध्येत, तदा सर्वज्ञत्वादिधर्मैश्वरग्राहकं 'यः सर्वज्ञः' (मु० १।१।९) इत्यादिशास्त्रमुपजीव्यमित्युभयथाऽपि विरुद्धगुणमुखेन भेदपर्यवसायिनोपजीव्यप्रमाणेन विरोधस्यावश्यंभावादिति । तदेतत्सर्वं भेदप्रमाणं विरुद्धगुणवत्त्वोपजीवकमुपन्यस्तामीति विरुद्धधर्माक्रान्तिरेक एव तव भेदसाधको न्यायः पर्यवसितः । तत्र च प्रागेव दत्तमुत्तरम् । जीवे सतामाधिकानन्दादीनामावरणेनाल्पानन्दत्वाद्यनुभवस्य त्वया स्वीकृततया तन्न्यायेन ब्रह्मगुणानां निरतिशयसर्वज्ञत्वसर्वशक्तिकत्वादीनां जीवे सतामेव संसारदशायामावरणे नाल्पज्ञत्वाल्पशक्तिकत्वाद्यनुभवसंभवात् । जीवे तत्सत्त्वानभ्युपगमेऽपि ब्रह्मणैश्वर्यवशादणुत्वमहत्त्वाद्यविरोधस्य त्वयाऽङ्गीकृततया तन्न्यायेनाधिकगुणस्यैव ब्रह्मणोऽल्पगुणजीवभावसंभवाच्च जीवब्रह्मणोर्विरुद्धगुणत्वमसिद्धमिति । एवं च रत्नशास्त्रावलोकनप्रभवस्य लक्षणज्ञानस्य किंचिद्रत्नलक्षणे तदन्यरत्नलक्षणविषयतया भ्रमत्वे तन्मूलरत्नविशेषप्रत्यक्षस्येव जीवब्रह्मणोर्विरुद्धगुणवत्त्वासिद्ध्या तज्ज्ञानस्य भ्रमत्वे तन्मूलभेदप्रत्यक्षस्यापि भ्रमत्वावश्यंभावान्न प्रत्यक्षं भेदे प्रमाणम् । हेत्वसिद्ध्यप्रयोजकत्वादेव नानुमानम् । जीवेऽपूर्णत्वबद्धत्वयोरसिद्ध्या पूर्णत्वापूर्णत्वयोर्बद्धत्वमुक्तत्वयोश्च विरोधासिद्ध्या वा तदुभयवत्त्वोपपात्तिमुखेन भेदप्रतिपादने श्रुतेस्तात्पर्यं कल्पयितुं न युक्तमिति श्रुतिरपि न तत्र प्रमाणम् । "भिन्नोऽचिन्त्यः" इति श्रुतिरस्तीति चेत्तस्या अप्यभेदप्रतिपादन एव तात्पर्यं सुवचम् । परमो जीवसंघाद्भिन्नो न चिन्त्यः किंत्वभिन्न एव चिन्त्य इति । पूर्णः पर इत्यादिभेदचिन्तननिषेधापेक्षितनिषेध्यप्रसक्तिपरतया संयोजनम् । जीवब्रह्मणोर्हि प्रत्यक्षागमाभ्यामपूर्णत्वपूर्णत्वे बद्धत्वनित्यमुक्तत्वे चावगम्येते । ते च लोकतो विरुद्धत्वेन प्रतीयेते । तन्मूलेन भेदभ्रमेण भेदानुचिन्तनं प्रसक्तमिति । अपि च नैवात्र विवादितव्यं, कथं विरुद्धगुणसमावेशे भेदाभाव इति । विरुद्धगुणशालिनामप्यर्जुनाखण्डलादीनां त्वया भेदराहित्यस्येष्यमाणत्वात् । त्वया हि "एक आत्मनः शरीरे भावात्" (ब्र० सू० ३।३। ५५) इत्यधिकरणेऽर्जुनादीनामन्योन्यानभिमतखाण्डवदहनतत्प्रशमनादिकृतवतामाराधकाराध्यत्वादिविषमगुणशालिनामपि निर्भेदत्वं व्यवस्थापितम्[१] । आखण्डलादयोऽ-

टि०— १ व्यवस्थापितमिति । ननु सविशेषाभेदपक्षे विद्यमानानां मुक्तिकालभोग्याधिकानन्दादीनामावरणमुपपद्यते । निर्विशेषाभेदपक्षे च सार्वज्ञ्यादेर्न कथंचिदप्यावरणमिति चेदत्र समाधिः । सविशेषयोर्जीवेशयोरैक्यस्य भवन्मते गगनकमलिनीकल्पत्वेन सविशेषाभेदपक्ष

व्या०—शिनः । अर्जुनाद्यास्तदंशाः पृथग्भूय संचारदशायामप्यंशिना सहाभिन्ना एव । पुनरपि तेनैक्यं च प्रतिपद्यन्त इति तव मतम् । एतेन जीवब्रह्मणोर्भेदाभावे ब्रह्मभोगानां जीवेऽप्यनुसंधानं स्यादित्यपि निरस्तम् । त्वन्मते भेदाभावेऽप्यर्जुनगतेन्द्रभोगानेनुसंधानवज्जीवगतब्रह्मभोगाननुसंधानोपपत्तेः । इन्द्रभोगानामर्जुनादिषु यदननुसंधानं तद्भेदाभावेऽपि भूम्याद्यपकृष्टदेशावस्थानगर्भप्रवेशमानुषान्न-

टि०—इति कथनस्याऽऽश्चर्यकरत्वात् । पूर्वपक्षिमतमवलम्ब्य तथा ब्रवीमीति चेद्भ्रान्तोऽसि । पूर्वपक्षिणाऽपि सविशेषाभेदानभ्युपगमात् । किंच तस्मिन्मते सार्वज्ञ्यादीनां कल्पितत्वेन तदावरणाभावस्येष्टत्वात् । "तुरीयं सर्वदृक् सदा" (गौ० का० १।१२) इत्यादिश्रुत्याऽनावृतसर्वप्रकाशकज्ञानस्वरूपत्वेन तस्य बोधनात । ऐश्वर्यस्य परमेश्वरेऽणुत्वमहत्त्वादिविरुद्धधर्मसंघटकत्ववज्जीवभावसंघटकत्वं संभवतीति पूर्वमेव स्थापितत्वेन तस्य जीवभावाविरोधाच्च । एतेन "विरुद्धगुणवत्त्वेन तद्भेदानुमानं सुकरम् । विरुद्धगुणवत्त्वज्ञानस्य भ्रमत्वे विरोधमात्रोच्छेदप्रसङ्गात् । नाप्यप्रयोजकत्वं, सर्व सांकर्यस्यैव विपक्षबाधकत्वात्" इत्यपास्तम् । विरुद्धगुणवत्त्वेन प्रमितयोरंशांशिनोः शक्रार्जुनयोरिव जीवेश्वरयोरभेदाविरोधेनाप्रयोजकत्वात् । सर्वसांकर्यस्य विपक्षबाधकत्वेऽर्जुनाखण्डलयोरपि तन्न स्यात् । न च तदैक्यं सर्वसंप्रतिपन्नं जीवेशयोस्तन्न तथा" इति शङ्क्यम् । "तत्त्वमसि" (छा० ६।८।७) "अहं ब्रह्मास्मि" (बृ० १।४।१०) इत्यादिश्रुतिप्रमितस्य त्वन्मात्रासंप्रतिपत्तौ परित्यागायोगात् । न च सा श्रुतिः—तद्गुणसारत्वन्यायेन तत्सदृशपरेति वाच्यम् । परीक्षितप्रमाणावगतस्य भेदस्य सिंहदेवदत्तयोरिव जीवेशयोरभावेन तादृशन्यायाप्रवृत्तेः । किंच तस्मिन्प्रत्यक्षमपि न प्रमाणम् । ससंबन्धिकपदार्थप्रत्यक्षस्य यावत्संबन्धिप्रत्यक्षजन्यत्वयावत्संबन्धिविषयकत्वयोः संयोगस्थले दृष्टत्वेन जीवेश्वरभेदस्य प्रत्यक्षत्ववचनस्य साहसमात्रत्वात् । अपि च प्रत्यक्षतो भेदसिद्धौ त्वदभिमतभेदसाधकश्रुतिसूत्राणामप्रामाण्यापातात् । प्रामाण्यस्याज्ञातार्थघटितत्वात् । प्रत्यक्षस्यावच्छेदकभेदविषयकत्वेनाप्युपपत्तेश्च । न च वाच्यं "सिद्धे जीवब्रह्मैक्ये भेदस्यावच्छेदकान्वितत्वं, सति च तस्मिन् जीवब्रह्मैक्यसिद्धिरित्यन्योन्याश्रयः" इति । जीवब्रह्मैक्यस्य पूर्वोक्तश्रुतिसिद्धस्यावच्छेदकभेदसिद्ध्यनधीनत्वात् । त्वन्मतेऽन्नमयादीनामेकत्वे तस्य स्वाश्रयप्रतियोगिकान्योन्याभावासामानाधिकरण्यं सति च तस्मिन् तेषामेकत्वसिद्धिरित्यन्योन्याश्रयाच्च । तस्मात्परमेश्वस्य सर्वेश्वरत्वानिर्वाहाय स्वशक्त्या जीवभावोऽप्यभ्युपगन्तव्य इति यत्किंचिदेतत् ।

१ अननुसंधानेति—ननु विषमो दृष्टान्तः । अर्जुनाखण्डलयोरंशांशिभावोऽस्ति । न जीवब्रह्मणोः । सर्वदा सर्वविषयज्ञानेनाप्रतिहतशक्तिकेनानन्याधीनेन च ब्रह्मणैकतां गतस्य जीवस्य तद्गतभोगानुसंधानमावश्यकमिति चेत्, न । एकीभावस्यैवानुसंधानप्रतिबन्धकत्वात् ।

व्या०—भोगादिकं निमित्तीकृत्याचिन्त्याप्रतिहतशक्तिकेन परमेश्वरेण क्रियत इति हि त्वयोक्तम् । एवं देहविशेषप्राप्त्यादिकं निमित्तीकृत्याचिन्त्याद्भुतशक्तिकेन परमेश्वरेण जीवे पारमेश्वरस्य जीवान्तरगतस्य च भोगस्याननुसंधानं क्रियत इति किमिति त्वया वक्तुमशक्यम् । यत्तु "परमेश्वरस्य जीवाभिन्नत्वे तस्यैश्वर्यमेव न भवेत् । यो जीवाभिन्नो नासावचिन्त्यशक्तिकतारूपैश्वर्यवान् । यथा देवदत्त इति व्याप्तेरिति" तत्तुच्छम् । यो जीवभिन्नो नासावैश्वर्यवान् यथा घट इति वदप्रयोजकत्वेन व्याप्त्यसिद्धेः । यच्चोक्तं " अभेदस्यानुसंधानमात्रं व्यापकं न तु सर्वानुसंधानं, अर्जुनादीनामाखण्डलादिगतानल्पविषयभोगाननुसंधानेऽपि तद्गतोपासनाफलानुसंधानमस्त्येव । एवं च जीवब्रह्मणोर्जीवानां चाभेदे देवदत्तस्य ब्रह्मगतजीवान्तरगतयत्किंचिद्भोगानुसंधानं दुर्वारमिति । तदपि तुच्छम् । यदि ह्यभेदे सत्यप्यननुसंधानं एकस्मिन्नेवाननुसंधानमनुसंधानं च विरुद्धं प्रसज्येतेत्यनुकूलतर्कमुपजीव्यानुसंधास्याभेदव्यापकत्वं गृह्यते तदा सर्वानुसंधानमेव व्यापकम् । कस्यचिदननुसंधाने तद्विरोधसमाधानालाभात् । ब्रह्मणश्च " एकमेवाद्वितीयम् " ( छा० ६ । २ । १ ) इत्यादिश्रुतिभिरेकत्वावधारणात्प्राणादिपर्यायेषु "अन्योऽन्तर आत्मा " इत्यन्यशब्दानां मुख्योऽर्थः परित्यज्यते । स च जीवब्रह्मणोरपि । यदि त्वभेदेऽपि कस्यचिदननुसंधानं संभवति, तदीयोचिन्त्यशक्तिबलेनानुसंधानाननुसंधानाविरोध-

टि०—' यो हि यं यद्गतधर्मं चानुसंधत्ते स तद्भिन्नो भवति । यथा घटतद्रूपद्रष्टा देवदत्त इति व्याप्तिदर्शनात् । प्रकृते व्यापकीभूतभेदाभावेन व्याप्यस्यानुसंधानस्याप्ययोगात् । अपि च जीवब्रह्मणोरंशांशिभावं निषेद्धुस्तव जिह्वा कुतः सहसा न पतति । भगवतैव जीवानां स्वांशत्वस्य " ममैवांशो जीवलोके जीवभूतः सनातनः " ( गी० १५ । ७ ) इत्यादिना प्रकटीकृतत्वात् । अर्जुनस्य भूम्याद्यपकृष्टदेशादिसंबन्धेनेन्द्रभोगाननुसंधानमुपयतस्तवान्तःकरणादिनिकृष्टोपाधिसंबन्धाज्जीवस्यापीश्वरभोगाननुसंधानमिति कुतो न सिध्येत् । तस्मान्न जीवादीश्वरस्य भेदसिद्धिरिति दिक् ।

१ व्याप्त्यसिद्धेरिति—नाप्रयोजकत्वं, जीवत्वस्यानीश्वरात्मत्वरूपतया जीवस्यैवेश्वरत्वे हेतूच्छित्तेरेव विपक्षबाधिकायाः सत्त्वात् । अनीश्वरस्येश्वरत्वव्याघाताच्चेति चेन्नैतद्भद्रम् । " अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य ", (छा० ६।३।२) इत्यादिश्रुत्या जीवस्येश्वरात्मत्वावगमेन हेतूच्छित्त्यभावात् । वस्तुत ईश्वरस्यैव सतः स्वाविद्यया जीवत्वमापन्नस्यार्जुनस्येन्द्रत्ववदीश्वरत्वोपपत्तेश्च व्याघाताभावादित्यास्तामेतत् ।

२ अचिन्त्यशक्तिबलेनेति—यत्त्ववच्छेदकभेदेन तयोर्विरोधपरिहारेणानुसंधानमात्र-

निर्भेदत्वं तवेष्टं विषमगुणजुषां शक्रपार्थादिकाना-
मन्यत्वस्योक्तिरन्योऽन्तर इति बहुशः संमता भेदहीने ॥ २९ ॥

व्या०—विधूननात्सर्वानुसंधानस्य व्यापकत्वं नेष्यते, तदाऽनुसंधानमात्रमपि न व्यापकम् । तद्बलेनैव क्वचिन्न कस्याप्यननुसंधानमित्यपि वक्तुं शक्यत्वात् । सहचारदर्शनमात्रस्याप्रयोजकत्वादित्यास्तामेतत् ।

स्यादेतत् । मा भूद्विरुद्धगुणाक्रान्त्या भेदसिद्धिः। अन्यत्वव्यपदेशेन तु स्यात् । दृश्यते हि साक्षादेव जीवब्रह्मणोरन्यत्वव्यपदेशः "तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति" ( मु० ३।१।१ ) "अन्यश्च परमो राजंस्तथाऽन्यः पञ्चविंशकः" ( ) "भेदव्यपदेशाच्चान्यः" ( ब्र० सू० १।१।२१ ) इत्यादिश्रुतिस्मृतिसूत्रेषु । नैतत्सारम् । त्वन्मते ब्रह्मण्यन्यत्वव्यपदेशस्य भेदासाधकत्वात् । त्वयाऽऽनन्दमयादीनां पञ्चानामपि ब्रह्मभावमभ्युपगच्छताऽन्नमयाद्यभिन्नेष्वेव प्राणमयादिष्वन्योऽन्तर आत्मेति व्यपदेश इतीष्यमाणत्वात् । "अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान् । प्रोच्यते भगवान्विष्णुरैश्वर्यात्पुरुषोत्तमः" इति वचनमुदाहृत्य त्वया तस्य निर्वाहाच्च । जीवब्रह्मान्यत्ववचनस्यापि तन्न्यायेन भगवदैश्वर्यबलादेव निर्वाहसंभवाच्चेति भावः ॥२९॥

ननु शब्दानां स्वार्थे वृत्तिरौत्सर्गिकी, अन्यशब्दस्य च भिन्नत्वमेव मुख्यार्थः । तथाऽप्यानन्दवल्ल्यामन्नमयादिपर्यायेषु पञ्चस्वपि "येऽन्नं ब्रह्मोपासते" ( तै० उ० २।२ ) "आनन्दं ब्रह्मणो विद्वान्" ( तै० उ० २।९ ) "विज्ञानं ब्रह्म चेद्वेद" ( तै० उ० २।५ ) "अस्ति ब्रह्मेति चेद्वेद" ( तै० उ० २।६ ) इति ब्रह्मशब्दाम्नानेन "एतमानन्दमयमात्मानमुपसंक्रामति" ( तै० उ० २।८ ) इत्यादिपर्यायेषु मुक्तप्राप्यत्वात्मशब्दयोः श्रवणेन चान्नमयादीनां पञ्चानामपि ब्रह्मरूपत्वावधारणाद्ब्रह्मणश्च "एकमेवाद्वितीयम्" ( छा० ६।२।१ ) इत्यादिश्रुतिभिरेकत्वावधारणात्प्राणमयादिपर्यायेष्वन्योऽन्तर आत्मेत्यन्यशब्दानां

टि०—मेवाभेदव्यापकम् । किंचाभेदकार्यस्य कस्याप्यभावेऽभेदोक्तिः पारिभाषिकी स्यात्" इति । तत्तुच्छम् । अवच्छेदकभेदेन विरोधपरिहारे भेदस्यापि तथा वक्तुं शक्यत्वेन श्रुतिबोधितवास्तवाभेदापरिहारात् । सुषुप्तौ विशेषविज्ञानाभावस्य जागरूकत्वेनाभेदस्य मुख्यत्वसंभवात् । जीवब्रह्मणोर्जीवानां च सत्यप्यभेदेऽनुसंधानकारणाभावादेव तदननुसंधानादिति दिक् ॥ २९ ॥

१ एकत्वावधारणादिति—एतेनेदं सूचितम्—"नान्योऽतोऽस्ति द्रष्टा" बृ० ३।७।२३ )

प्राबल्यं भवतोऽप्यभेदवचसां भेदश्रुतिभ्यो मतं
नो चेदन्नमयादयो वद कथं भिन्ना भवेयुर्न ते ।
भेदे सत्यपि युज्यते हि भगवच्छक्त्यैव निर्दोषता
शक्तः किं न स एक एव बहुधा भिन्नो हरिः क्रीडितुम् ॥३०॥

---

व्या०—मुख्यार्थः परित्यज्यते। न च जीवब्रह्मणोरन्यत्वव्यपदेशे मुख्यार्थबाधकमस्ति। एवं विरुद्धगुणाक्रान्त्याऽपि भेदसिद्धिरौत्सर्गिकी, अणुत्वविभुत्वादीनामेकस्मिन्नेव ब्रह्मणि प्रमाणबलेनावधृतत्वात्तत्र विरुद्धगुणवत्त्वमैश्वर्यबलादिति समाधीयते। न चेह तथा बाधकमस्ति । तस्माज्जीवब्रह्मणोर्विरुद्धगुणवत्त्वेन साक्षादन्यत्वव्यपदेशेन च भेदसिद्धिः स्यादेवेत्याशङ्कामपाकरोति——प्राबल्यमिति । "एकमेवाद्वितीयम्" ( छा० ६।२।१ ) "नेह नानाऽस्ति किंचन" ( क० ४।११ ) इत्याद्यभेदश्रुतीनां भेदश्रुतिभ्यः प्राबल्यं तवापि संमतम् । अन्यथा 'अन्योऽन्तर आत्मा' इति भेदश्रुत्यनुसारेणान्नमयादीनां भेदो दुर्वारः। न वाऽभेदश्रुतीनां ब्रह्मभेदश्रुतिभ्य एव प्राबल्यं न जीवब्रह्मभेदश्रुतिभ्य इत्यत्र विशेषहेतुरस्ति। "एकमेवाद्वितीयम्" ( छा० ६।२।१ ) इत्यादिशब्दस्वारस्यस्यास्मदुक्तषड्विधतात्पर्यलिङ्गवत्त्वस्य च लाघवस्य वा प्राबल्यहेतोरुभयत्राप्यविशेषात् ।

---

टि०—इति चेतनान्तरानिषेधादात्मैक्यमप्यवधृतामिति तत्सहितं "तत्त्वमसि" (छा० ६।८।७) इति वाक्यं जीवेशाभेदबोधकमित्यतः "तत्त्वमसीतिवाक्यस्यालब्धात्मकतयाऽबाधकत्वोक्तिः कस्यचिद्तीवापेशला । अभेदवाक्यस्याबाधकत्वेऽन्नमयादीनामैक्यासिद्धिः, तस्य बाधकत्वे जीवब्रह्मणोरप्यभेदसिद्धिः" इति ।

१ अविशेषादिति । अत्राऽऽह कश्चित्—प्रत्यक्षादिविरोधेन जीवब्रह्माभेदश्रुतीनामात्मलाभासंभवः। मानान्तरविरोधे तात्पर्यलिङ्गस्याकिंचित्करत्वात् । अन्यथा यजमानप्रस्तरत्वादेरपि सिद्धिप्रसङ्गात् । लाघवाज्जडप्रपञ्चचैतन्ययोरप्यैक्यापाताच्च। अन्नमयादीनां पञ्चानामपि कारणत्वब्रह्मत्वाद्यवगमेन भेदश्रुतीनामेवाऽऽत्मलाभात् । मानान्तराविरोधाभावेन भेदश्रुतीनामेव षड्विधतात्पर्यलिङ्गवत्तया प्रबलत्वात्" इति । तत्र प्रतिविधीयते—प्रत्यक्षविरोधस्तावदसिद्धः । ब्रह्मणोऽप्रत्यक्षत्वेन तदनुयोगिकस्य तत्प्रयोगिकस्य वा भेदस्याप्रत्यक्षत्वस्य पूर्वं सयुक्तिकं व्यवस्थापितत्वात् । अनुमानस्य प्रत्यक्षमूलत्वेन मूलोच्छेदे तद्विरोधस्य गजा अपि पलायन्त इति न्यायग्रस्तत्वात् । किंच मानान्तरविरोधे तात्पर्यलिङ्गैरेव श्रुत्यर्थस्य निर्णेयत्वात् । तात्प-

व्या०—स्यादेतत्। नाभेदश्रुतिप्राबल्याद्ब्रह्मभेदश्रुतीनां मुख्यार्थं परित्यजामः। किंतु सकलवेदमहातात्पर्यविरोधात्। तथा हि—"सर्वेषामपि वेदानां मोक्ष एव प्रयोजनम्। तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तते" ( ........... ) इत्यादिवचनात्। मोक्षस्य च तत्प्रयोजनत्वं न साक्षात्तत्साध्यतया। तस्यानेकश्रुतिस्मृतिपुराणैर्भगवत्प्रसादेनैव साक्षात्साध्यत्वावधारणात्। किंतु यज्ज्ञानेन मोक्षहेतुर्भगवत्प्रसादः संपाद्यते, तत्प्रतिपादनद्वारेति वाच्यम् (?)। तत्प्रसादश्च तदीयनिर्दोषगुणोत्कर्षज्ञानाद्भवतीति लोकतः "यो मामेवमसंमूढः" (गी० १५। १९) इत्यादिभगवद्वचनैश्चावधारितम् (?)। ततः सर्वेषामपि वेदानां भगवतो निर्दोषाशेषगुणपूर्णत्व एव महातात्पर्यम्। तद्विरुध्यते ब्रह्मभेदश्रुतीनां स्वार्थपरत्वे, भिन्नानां गुणतारतम्यानुग्राह्यानुग्राहकभावादिदर्शनेन ब्रह्मरूपेष्वपि तत्प्रसक्त्या निर्दोषाशेषगुणवत्त्वासिद्धेः। जीवब्रह्मभेदश्रुतीनां स्वार्थपरत्वे तु तन्न विरुध्यते। प्रत्युत तासामतत्परत्व एव विरुध्यते, जीवब्रह्माभेदे जीवदोषैर्ब्रह्मणोऽपि सदोषत्वापत्तेः। तस्माद्ब्रह्मभेदश्रुतीनामेव स्वार्थपरित्यागो न जीवब्रह्माभेदश्रुतीनामिति विशेषो युक्त इति चेन्मैवम्। अन्नमयादीनां विश्वतैजसादीनां च ब्रह्मरूपाणां भेदश्रुत्यनुसारेण विरुद्धगुणवत्त्वानुसारेण भेदे सत्यपि भगवदैश्वर्यबलादेव निर्दोषाशेषगुणपूर्णतो-

टि०—र्यवत्याः श्रुतेरेव प्राबल्येनार्थवादवाक्येन यजमाने प्रस्तरत्वस्यासिद्धेः। प्रमाणाभावेन चिज्जडयोरैक्यासिद्धेश्च। भेदश्रुतीनामेवाऽऽत्मलाभ एकमेवेति श्रुतेर्द्वितीयान्नमयादिनिषेधपरत्वेन ब्रह्मैक्यासिद्ध्या त्वदिष्टार्थासिद्धेः। भेदश्रुतीनां तात्पर्यनिर्णायकशास्त्रान्तरस्याप्राप्यासिद्धेः। सिद्धौ चैतच्छास्त्रस्य त्वत्सिद्धान्तेऽप्यनारम्भादिति दिक्।

१ ऐश्वर्यबलादेवेति—सर्वगुणपूर्णत्वरूपसर्वेश्वरत्वसिद्ध्यर्थं ब्रह्मरूपाणामन्नमयादीनां भेदस्य श्रुत्यादिसिद्धस्यापि पारमेश्वरशक्त्या समाधाय तेषामपरिच्छिन्नपरमेश्वररूपत्वमङ्गीकर्तव्यम्। अन्यथा त्वदीयपरमेश्वरस्य स्वगतभेदेन परिच्छिन्नत्वापत्तेरिति भावः। एतेन "भगवदैश्वर्यमपि लोकमर्यादानुरोधि, ब्रह्मभेदाभ्युपगमे ब्रह्मणः समाभ्यधिकद्वितीयराहित्यरूपाद्वितीयत्वाविरोधेन तस्य तथा संकल्पानुदयात्। भिन्नत्वे तत्साम्यापातात्, न्यूनाधिकभावापाताच्च। नहीश्वरोऽपि स्वस्यैश्वर्यविरोधिभूतमर्थं संकल्प्य करोति। तस्य प्रेक्षावत्त्वात्। तस्माद्ब्रह्माभेदश्रुतीनां जीवब्रह्मभेदश्रुतीनां च प्राबल्यम्। ब्रह्मभेदश्रुतीनां जीवब्रह्माभेदश्रुतीनां च दौर्बल्यम्" इति केनचित्प्रलपितं परास्तम्। ब्रह्मभेदाभ्युपगमे समाभ्यधिकद्वितीयराहित्याविरोधवज्जीवभेदाभ्युपगमेऽपि "ब्रह्मदासा ब्रह्मदाशा" ( ) इतिश्रुत्युक्तजीवाभेदविरोधस्यापि

व्या०—पपत्तेः । नहि भगवानशेषमपि स्वेच्छया कर्तुमकर्तुमन्यथा कर्तुं शक्त इति वदतस्तव लीलयाऽभिन्नो भवन्नप्यहं निर्दोषाशेषगुणपूर्णः स्यामिति स्वसंकल्पेन भेदमास्थाय क्रीडितुं न शक्त इति वक्तुं शक्यम् । न च वाच्यं तथा संकल्पमेव भगवान्न करोतीति । भेदश्रुत्या विरुद्धधर्मोन्क्रान्त्या चान्नमयादीनां विश्वादीनां च स्वतः प्राप्तस्य भेदस्यापवादकाभावेन तस्यावश्यमङ्गीकर्तव्यत्वेन तथा संकल्पं करोतीत्येव वक्तव्यत्वात् । तस्माद्गत्यन्तराभावाद्भेदनिषेधश्रुतीनां प्रबलत्वेन भेदापवादकत्वमास्थायैव तथा संकल्पं करोतीति निर्वहणीयम् । प्राबल्यं च भवज्जीवब्रह्मभेदश्रुतिभ्योऽपि भवेत् । विशेषहेत्वभावात् । न च ब्रह्मनिर्दोषत्वश्रुत्यनुरोधविरोधौ विशेषहेतू । दुःखादिदोषाश्रयत्वं सदोषत्वमित्यभ्युपगमे त्वन्मतेऽपि दुःखादीनामन्तःकरणधर्मत्वेन जीवस्यापि निर्दोषत्वात् । दुःखादिस्वामित्वं तदित्यभ्युपगमे त्वन्मते ब्रह्मण एव वा ब्रह्मणोऽपि वा दुःखादिस्वामित्वेन तत्सदोषत्वानिवारणात् । दुःखादिमत्त्वाध्यासशालित्वं तदिति चेन्न । तस्याप्यशेषविशेषदर्शिनि ब्रह्मण्यसंभवात् । ब्रह्मणो विशेषदर्शनेनैव तदभिन्नजीवस्यापि विशेषदर्शनवत्त्वेऽपि ब्रह्मतद्धर्माणां जीवं प्रति तदीयानन्दवदावृतत्वस्य तवापि संमतत्वेन ब्रह्मणो विशेषदर्शनस्य जीवं प्रत्यसत्कल्पत्वात् । ब्रह्म प्रति स्वाभिन्नजीवगतदुःखाध्यासस्यानावृतत्वेऽपि देवदत्तमुखाभिन्नप्रतिमुखगतश्यामत्ववक्रत्वादेर्विशेषदर्शनं देवदत्तं प्रतीव ब्रह्म प्रति हेयत्वाभावात् । मन्मते बिम्बौ भिन्नौ । प्रतिबिम्बगतवक्रत्वादयोऽपि सत्या इति चेन्न । येषां तावभिन्नौ ते च वक्रत्वादयोऽध्यस्ता इति मतं तेषामपि स्वप्रतिबिम्बगतवक्रत्वादिदर्शनेन विषादाद्यभावात् । प्रत्युत "प्रतिबिम्बगताः पश्यन्नृजुवक्रादिविक्रियाः । पुमान्क्रीडेद्यथा ब्रह्म तथा जीवस्थविक्रियाः" ( ब्र० सू० २ । १ । ३३ ) इति कल्पतरूक्तरीत्या हर्षदर्शनात् । एतेन जीवगतासर्वज्ञत्वाल्पशक्तिकत्वपारतन्त्र्यादिकं दोष इत्यपि निरस्तम् । जीवस्य ब्रह्माभेदसिद्धौ तस्य सर्वस्याप्यध्यस्तत्वोपपत्तेः । तस्मान्नाभेदश्रुत्यवलम्बनेन भेदकश्रुत्यवलम्बनेन वा जीवब्रह्मभेदसिद्धिं प्रत्याशा कर्तव्येति भावः ॥३०॥

टि०—दुर्वारेण जीवभेदसंकल्पानुदयात् । परस्य जीवभिन्नत्वे वस्तुपरिच्छेदापत्त्या मिथ्यात्वापत्तेः । नहीश्वरः स्वस्यापरिच्छिन्नत्वविरोधिद्वितीयचेतनरूपं संकल्पयति । तस्माद्ब्रह्माभेदश्रुतीनामिव जीवब्रह्माभेदश्रुतीनां प्राबल्यं भेदश्रुतीनां दौर्बल्यमिति श्रुत्यैव जीवो ब्रह्माभिन्न आत्मत्वाद्ब्रह्मवदित्यनुमानसहकृतया जीवब्रह्माभेदसिद्धिरिति दिक् ॥ ३० ॥

शब्दान्तरादिकथनं त्विह भेदसिद्ध्यै
हासास्पदं सदसि दर्भपवित्रनीत्या ।
पूर्वत्र तन्त्र इव काल्पनिकेऽपि भेदे
तेषां घटेत किमिहापि न चारितार्थ्यम् ॥ ३१ ॥

---

व्या०—यत्त्वत्राऽऽधुनिकोक्तं—कर्ममीमांसायां व्युत्पादितैः शब्दान्तरादिभेदप्रमाणैर्जीवब्रह्मणोर्भेदः सिध्यति । अस्ति हि "एष एव जीवं प्रबोधयति । एतस्माज्जीव उत्तिष्ठति" ( ......... ) इति विरुद्धार्थधातुनिष्पन्नाख्यातरूपं शब्दान्तरम् । "नित्यः परो नित्यो जीवः" (............) इत्यप्रतिज्ञायमानः पुनः श्रुतिरूपोऽभ्यासः । "द्वा सुपर्णौ" ( मुं० ३ । १ । १ ) इत्यादि संख्या । "अनश्नन्नन्यः" ( मुं० ३ । १ । १ ) इत्यादिभेदको गुणः । "यतो वाचो निवर्तन्ते" (तै० उ० २।४) इत्यादि प्रकरणान्तरम् । "जीवेशौ" (नृ०उ०ता०९) इति नामधेयभेदश्चेति । तदिदं प्रत्यक्षादिषु भेदप्रमाणेषु पराहतेषु शब्दान्तराद्युपन्यसनं प्रतिग्रहलब्धं हस्तिनमविक्रीय स्वगृहे स्थापयितुकामस्य मुग्धश्रोत्रियस्य हस्तिपकेन घासे पृष्टे स्वगृहे संपादितान्सर्वान्दर्भमुष्टीन्क्रमेण तदग्रे निहितवतस्तेषु क्षणेन निगीर्णेष्वन्ततः स्वकरस्थदर्भपवित्रनिधानमनुकरोतीति सोपहासं दूषयति—शब्दान्तरादीति । कर्ममीमांसकैरिदं शब्दान्तरादिकं मुख्यभेदे प्रमाणतया नोपन्यस्तम् । न हि तैः शब्दान्तरादिकं प्रदर्श्योपपाद्यमानस्तदभावे प्रदर्श्योपपाद्यमानश्च कर्मभेदः शास्त्रभेदो वाऽन्योन्याभावादिरूपो मुख्यः । "सप्तदश प्राजापत्यान्पशूनालभते" इत्यत्र "दधिमधुघृतमापो धानाः करम्भास्तण्डुलास्तत्संसृष्टं प्राजापत्यम्" इत्यत्र "ऐन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायाम्" इत्यत्र च प्राजापत्यपशूनां प्राजापत्यदध्यादीनामैन्द्रदधिपयसोश्च प्रधानयौगपद्येन प्राजापत्याद्युद्देशेन तत्तद्द्रव्यविषयसंकल्परूपाणां यागानामैकैकत्वेऽपि सप्तदश प्राजापत्ययागाः सप्तदश दध्यादियागा द्वौ दधिपयोयागा-

---

टि०— १ पूर्वत्र तन्त्र इति । पूर्वमीमांसायामित्यर्थः ।

२ कर्मभेदे शास्त्रभेदे च प्रमाणत्वेन क्लृप्तानां शब्दान्तरादीनां चेतनभेदे प्रमाणत्वेनोपन्यासे सहस्रनामवशाद्विष्णोरपि चेतनस्य नानात्वप्रसक्त्या तन्मतहानिरिति दोषे जाग्रत्येव दूषणान्तरमाह—प्रत्यक्षादिष्विति । प्रत्यक्षस्य जीवब्रह्मभेदविषयकत्वं नास्तीति पूर्वमेव प्रतिपादितत्वेन तन्मूलकश्रुतिविरुद्धभेदप्रमाणानि सर्वाण्यपि पराहतानि। अतः "प्रत्यक्षादीनां भेदे प्रामाण्येन शब्दान्तरादीनामपि तत्र प्रामाण्योपपत्तिः" इति कस्यचित्प्रलापो नावकाशं लभत इति भावः ।

व्या०—विति भेदोपपादनात् । "सोमेन यजेत" इत्यत्रेन्द्रवाय्वाद्युद्देशेन तत्तत्पात्रस्थितसोमरससंकल्परूपाणां यागानां भिन्नत्वेऽप्यग्निहोत्रं जुहोतीत्यत्राऽऽहवनीयादिषु हविःप्रक्षेपरूपाणां होमानां भिन्नत्वेऽपि भेदनिरासात् । सप्तदश प्राजापत्यानीतिवाक्यरूपस्य शास्त्रस्यैकत्वेऽपि भेदोपपादनात् । "व्रीहिभिर्यजेत" "व्रीहीनवहन्ति" इत्यादिवाक्यरूपाणां शास्त्राणां भिन्नत्वेऽपि भेदनिरासाच्च । यद्यपि—कर्मापि गोत्वादिवदेकमेव नित्यमनेकानुगतं, न त्वाश्रयभेदेन तद्भेदोऽस्ति । 'अयं चलति, अयमपि चलति, इत्यादिप्रत्यभिज्ञया तदैक्यसिद्धेस्तद्भेदबुद्धेराश्रयभेदादुपपत्तेः । संततानुपलब्धेश्च शब्दवद्व्यञ्जकाभावेनोपपत्तेः । एवमन्यत्रापि कर्मैक्ये यत्र शब्दान्तरादिद्वैतीयीकप्रमाणमस्ति तत्र कर्मभेदोऽङ्गी क्रियते । अतः शब्दान्तरादिप्रमाणषट्कावधिः कर्मभेदो न ततः परं तद्भेद इति । कौमारिलानां क्वचित्पक्षे "सोमेन यजेत, अग्निहोत्रं जुहोति" इत्यत्र शब्दान्तराद्यभावान्न यागहोमभेदः, किंत्वेकैकस्यैव यागस्य होमस्य च देवताभेदेनाधिकरणभेदेनाभ्यासमात्रमिति मुख्याभेद उपपादयितुं शक्यते । तथाऽपि—सप्तदश प्राजापत्यानीत्यादिषु तस्मिन्नपि पक्षे मुख्याभेद उपपादयितुं शक्यत एव । अत एव स्वारस्यात्सर्वलोकसिद्धभेदप्रत्यक्षतोऽपि बलवती प्रत्यभिज्ञा शब्दान्तरादितः कथं बलवती न स्यात्' इत्यस्वारस्याच्च सर्वकर्मैक्यपक्षे शब्दान्तरादिस्थलेऽप्यमुख्यभेद एव कौमारिलैराश्रितः । "शब्दान्तरे कर्मभेदः (जै० सू० २ । २ । १)" इत्यादिसूत्रस्वारस्यं प्रौढ्या समर्थयितुं परं शब्दान्तरादिस्थले मुख्यः कर्मभेद इति कश्चित्पक्ष उपन्यस्तः । तस्मादनुष्ठानविशेषोपयोग्यपूर्वभेदाद्युपाधिकः काल्पनिको भेदः शब्दान्तरादिसूत्रावसेय इत्येव सर्वेषामपि कर्ममीमांसकानां मतम् । उक्तं हि तन्त्ररत्ने—"क्रियाणामाश्रितत्वाद्द्रव्यान्तरे विभागः स्यात्" (जै० सू० ६ । ३ । ११) इत्यधिकरणे । तथाऽपि सर्वत्रैलोक्यवर्तिन्येकैव कर्मव्यक्तिः, अनुष्ठानमात्रं तु भिद्यते । यावदेकापूर्वानुबन्धमेकेन शास्त्रेण विषयीकृतं तावदेकं कर्म, तदन्यत्तु भिद्यत इति भेदाभेदव्यवहारसिद्धिरिति" । उक्तं च वरदराजीये-

टि०— १ प्रत्यभिज्ञयेति—अत्र—"अयं दण्डी, अयमपि दण्डी, अयं घटो रूपी, अयमपि घटो रूपी, अयं घटो ध्वस्तोऽयमपि घटो ध्वस्तः" इति प्रत्यभिज्ञां विषयैक्यासाधिकां प्रतिवक्ति यदि कश्चित्, स कर्मैक्यप्रस्तावे द्रव्यगुणध्वंसानैक्योदाहरणस्य वैषम्यबोधनेन प्रतिबोधनीयः । गुणैक्यस्य संमतत्वेन 'अयं रूप्ययमपि रूपीति' गुणभेदोदाहरणस्यात्यन्तमयुक्तत्वादिति च । अयं रूपीत्यादिना गुणैक्यस्य सिद्धेरिति दिक् ॥

व्या०—शब्दान्तराद्यधिकरणे ( जै० सू० २।२।१ ) भिन्नापूर्वानुबन्धप्रतिपादन-योग्यताज्ञानं यत्तदेव शास्त्रभेदज्ञानमित्युच्यते " इति । तत्रैव संख्याधिकरणेऽप्युक्तम् ( तै० सू० २ । २।७ ) । न च सप्तदशप्राजापत्यादिवाक्यस्यैकत्वान्न शास्त्रभेदः । न वाक्यभेदः शास्त्रभेदे तन्त्रम् । किंतु निरपेक्षभिन्नालौकिकार्थ-प्रतिपादकत्वमेव । तच्चेहाप्यस्ति " इति ।

एवं च यथा पूर्वतन्त्रे शब्दान्तरादेर्वस्तुतो भेदराहितेऽपि काल्पनिकभेदविषयत्वेन चारितार्थ्यमेवमिहापि तस्य जीवब्रह्मणोर्भेदाभावेऽपि काल्पनिकभेदवि·

टि०— १ काल्पनिकेति—यदाऽनुष्ठानप्रयोजकापूर्वमेकमेकशास्त्रजन्यप्रमितिविषयस्तदा तत्कारणमेकं कर्म, अपूर्वभेदेऽपि कर्मैक्ये कल्पिततद्भेदमादायैव व्यवस्था तद्वच्छब्दान्तरादिभिः सिध्यज्जीवेशभेदोऽपि काल्पनिक इति त्वन्मनोरथो विफल इति भावः । यत्त्वत्र—" कर्मणां स्वत एव भेदो वाच्यः, नत्वपूर्वभेदोपाधिकः । अपूर्वभेदस्य कर्मभेद-प्रयुक्तत्वात् । कार्यभेदस्य सामग्रीभेदप्रयोज्यत्वात् । अन्यथाऽपूर्वभेदाभावप्रसङ्गात् " इति । तन्न । विकल्पासहत्वात् । कार्यभेदो वास्तवकारणभेदव्याप्य उत वास्तवकारणभेदः कार्यभेदव्याप्यः । नाद्यः । सप्तदश प्राजापत्यानीतिशास्त्रप्रतिपाद्यापूर्वे व्यभिचारात् । न द्वितीयः । शतचण्डालस्पर्शरूपनिमित्तेषु विभिन्नेष्वपि स्नानरूपकार्यभेदाभावेन व्यभिचारात् । अपि चानेकोद्देशेन सकृदनुष्ठानं तन्त्रमिति मीमांसकमर्यादा । एवंरूपमेवेदं तन्त्रं गृहीत्वा समग्रैकादशाध्यायो महर्षिणा प्रवर्तितः । प्रत्युदाहरणत्वेन कर्मणामावृत्तिश्च साधिता । " एकधा वपां जुहोति " ( तै० ब्रा० १ । ३ । ४ । ५ ) इत्यादिना प्राजापत्ययागोपयुक्तानां वपादीनामेकैव प्रक्षेपक्रिया प्रतिपत्तिरूपा बोध्यते तन्त्रेण । नवमे—" एकधाऽस्य त्वचमाच्छ्यतात् " ( तै० ब्रा० ३ । ५ । ६ । २ ) इति वाक्यार्थविचारे—एकप्रयत्नसाध्यत्वमेकधाशब्दार्थ इति निर्णीतम् । एवं पञ्चमेऽध्याये—" पशुगणे तस्य तस्यापवर्जयेत् " ( जै० सू० ५ । २ । १० ) इत्याद्यधिकरणेषु—' स्विष्टकृदिडाभक्षणे तन्त्रेणैव ' इत्याद्यनेकस्थलेषु कर्मण एकत्वं मीमांसकसंमतं द्रष्टव्यम् । एवं प्राजापत्यपशुयागानां सप्तदशानां सप्तानां प्राजापत्ययागानां द्वयोर्दधिपयोयागयोश्च सकृदनुष्ठानं कार्यमिमि शास्त्रार्थे सिद्धे साऽपि यागक्रिया, एकैकैव तत्तद्वाक्येषु निर्णेतव्या न तु युगपदनेका यागक्रियाः । तथात्वे द्वित्रिपश्वादिरूपद्रव्यहानावपि स स यागो देवतोद्देशेन द्रव्यत्यागात्मकः सिद्ध एवेति शास्त्रार्थोऽनुष्ठित एव स्यात् । तथा च प्राजापत्यपश्वादिषु सप्तदशत्वादिबोधिका श्रुतिः पीड्येत । अतस्तदबाधायापूर्वजननं द्वारीकृत्य तत्सिद्ध्यर्थं तावत्पशुद्रव्यग्रहणानियमोऽङ्गीकार्यः । तथा च वाजपेयसाद्गुण्यजनकानां सप्तदशापूर्वाणां फलजनकक्रियाव्यापाररूपत्वेन व्यापारिभिरपि तत्समसंख्याकैर्भाव्यमिति वस्तुतः क्रियाया एकत्वेऽपि सप्तदशत्वादिकं कल्प्यते । किंच ज्ञानमिच्छा कृति-

निर्मर्यादप्रवृत्ते तव तु हतमते सोऽपि भेदो न सिध्ये-
द्यस्त्वं नानाधिकारश्रुतपरगुणसांकर्यमिच्छस्युपास्तौ।
अंशानां खल्वभेदेऽप्यथ च भगवता सन्ति शब्दान्तराद्या-
स्तत्स्यान्मत्स्यादिरीत्या सकलजनिमतां वासुदेवांशभावः॥३२॥

व्या०—षयतया चारिताथ्र्यसंभवान्न ततस्तयोर्मुख्यभेदासिद्धिरित्यर्थः॥ ३१॥

एवं पूर्वमीमांसामर्यादया शब्दान्तरादीनां काल्पनिकभेदविषयतयाऽपि चारितार्थ्यं संभवतीत्युक्तम्। परमर्यादया तु तैस्तथाभूतोऽपि भेदो न सिध्यतीत्याह—निर्मर्यादेति। दहरविद्याशाण्डिल्यविद्यावैश्वानरविद्याषोडशकलाविद्योपकोसलविद्यापर्यङ्कविद्येत्यादिसंज्ञाभेदेन प्रसिद्धा ब्रह्मविद्या यथा यथा शब्दान्तरादिप्रमाणैः परस्परं भिन्नाः। भिन्नत्वादेव तत्तद्विद्याम्नाततत्तदुपास्यगुणा वाजपेयाश्वमेधादिकर्मणामङ्गकलापवद्यथाप्रकरणं व्यवस्थिताः। न तासु परस्परं गुणोपसंहारः। किंत्वेकैकस्यां विद्यायां नानाशास्त्राम्नातगुणोपसंहारमात्रमिति। सर्वासामपि तासामुपास्यगुणतारतम्येनोपासनाकालतारम्येन सहकारियज्ञादितारतम्येन च फलभोगतारतम्यवती देवयानमार्गप्राप्या सगुणब्रह्मलोकावाप्तिरपरमुक्तिरूपा फलमित्यस्माकं मतम्। त्वया त्वत्रैवमङ्गीकृतं—सर्वविद्याम्नातानां कर्मकाण्डगताग्नेयसौर्यादिसूक्ताम्नातानां च सर्वेषां गुणानामुपासनायामुपसंहारः कार्य इति। न विद्याभेदेन गुणानां प्रतिप्रकरणं व्यवस्था किंतु मानुषाद्या हिरण्यगर्भान्ता मुक्त्यधिकारिणः फलतारतम्येन मुक्तिभाज इत्य[1]धिकारिभेदेनैव। तत्र हिर-

टि०—श्चेति हि त्रयमप्येकैकस्मिन्क्षण एकैकमेव जायत इति सर्वतीर्थकरसिद्धान्तः। कृतिरेवेह यत्न इति, अर्थभावनेति च कौमारिलानां व्यवहारः। कथमेवं सति युगपदनेके यत्नास्तदन्वनेकाः क्रिया युगपज्जायेरन् प्रत्यक्षी क्रियेरन्निति च वदन्प्रामाणिकानां ग्राह्यवचनो भवेत्। अन्यथा "द्वितीये द्विगुणं प्रोक्तं तृतीये त्रिगुणं भवेत्। चतुर्थे नास्ति निष्कृतिः"। इत्यादिमहापातकसमसंख्याकप्रायश्चित्तविधिरनर्थकः स्यात्। भवदुक्तयुक्त्या सकृदनुष्ठानेऽपि महापातकसमसंख्याकप्रायश्चित्तक्रियायाः सिद्धत्वात्। तस्मात्सर्वप्रमाणविरुद्धोऽयं वास्तवयागादिक्रियाभेदवादः शास्त्रापार्थीकरणं चातीव साहसमिति दिक्॥ ३१॥

१ अधिकारिभेदेनैवेति—एवं च कार्यभेद एव कारणभेदव्यवस्थापक इत्यवश्यं त्वयाऽङ्गीकार्यत्वेन कारणभेदात्कार्यभेदोक्तिः स्वमूलक्षतिकरीति भावः। ननु तत्र प्रमाणबलेन बाधकसद्भावेन च तथात्वेऽपि प्रकृते शब्दान्तरादिभिर्जीवेश्वभेदसिद्धिरिति चेन्न। द्वैतसत्यत्वे "नेह

व्या०-ण्यगर्भः सर्वोत्कृष्टमुक्त्यर्हतया यावत्कर्मब्रह्मकाण्डाम्नातासंकुचितसकलगुणोपसंहारयोग्यः। अन्ये तु स्वस्वभाविमुक्त्यनुसारिगुणोपसंहारयोग्याः। यद्यप्यस्मदादिभिर्मुक्त्यधिकारिभिरुपासनारम्भसमये स्वस्वभाविमुक्तिस्वरूपं प्रतिपुरुषमनादियोग्यतानुसारेण व्यवस्थिततारतम्यमजानद्भिः स्वस्वोपासनायोग्यगुणा निर्णेतुं न शक्यन्ते । अयोग्यगुणोपसंहारप्रयत्नश्चानर्थफलः । "अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्यासाभ्याम्" इति संकर्षणसूत्रात्। "अधिकाराधिको यत्नः प्रायशो नोपपद्यते । कथंचिदधिके यत्ने दोषः कश्चित्समापतेत्" इति वचनाच्च। तथाऽपि स्वस्वगुरोरन्यस्माद्वा कुतश्चित्सर्वज्ञाद्भाविस्वस्वमुक्तिफलरूपं ज्ञात्वा तदनुसारेण स्वस्वयोग्यगुणानपि तत एवावगम्य तेषामुपसंहारः कार्यः। न च बह्वल्पगुणप्रतिपादकविशेषपरिग्रहेण मुक्त्यधिकारिणां फलोत्कर्षापकर्षनिर्वाहात् प्रकरणाद्युल्लङ्घनेन गुणोपसंहारो न कार्य इति वाच्यम् । सकलगुणोपासनायोग्यहिरण्यगर्भस्य सकलगुणपरिग्रहायान्येषामपि स्वस्वमुक्तियोग्यगुणविशेषपरिग्रहाय च नानाप्रकरणविप्रकीर्णगुणोपसंहारावश्यंभावात् । क्वचिदपि विद्यायां सर्वगुणाम्नानादर्शनात् । तत्तन्मुक्त्यनुरूपगुणविशेषाम्नाननियमाभावाच्चेति । तदेतत्सर्वम्—"उपसंहारोऽर्थाभेदात् । विधिशेषवत्समाने च" ( ब्र० सू० ३ । ३ । ६ ) "प्राप्तेश्च समञ्जसम्" ( ब्र० सू० ३ । ३ । १० ) "इतरे त्वर्थसामान्यात्" ( ब्र० सू० ३ । ३ । १४ ) "पुरुषविद्यायामपि चेतरेषामनाम्नानात्" ( ब्र० सू० ३ । ३ । २५ ) इति सूत्राणि लिखित्वा रचितेषु त्वदीयाधिकरणेषु स्पष्टमेवमङ्गीकृतवता त्वया शब्दान्तरादीनां भेदकत्वमेव त्यक्तं भवति। तेषां भेदकत्वे तैरापाततो विद्याभेदस्यानिवार्यत्वात्। विद्याभेदे सति तत्तविद्याव्यवस्थितगुणोपसंहारायोगात् । न ह्येकाग्निमुपासीनस्याऽऽयुरादिकमपेक्षितमिति ।

---

टि०—नानाऽस्ति किंचन" (क०उ०४।११) इत्यादिश्रुतिबाधसत्त्वेन "तत्त्वमसि"(छा०६।८।७) इत्यादिप्रमाणसद्भावेन चाद्वैतब्रह्मात्मभावस्याप्यङ्गीकरणीयत्वात्। "अन्योऽन्तर आत्मा प्राणमयः', इत्यादिस्थले शब्दान्तरादिभिर्भेदानङ्गीकाराच्च । यच्च तत्त्वमसीत्यादिश्रुतीनां त्वदुक्तार्थमादाय लब्धस्थितिकत्वाभावेन वैषम्यमिति। तन्न। त्वन्मत एवोक्तवाक्यस्य लब्धस्थित्यभावात्। त्वया हि तत्र अतत्—इति पदं छित्त्वा जीवब्रह्मभेदस्ताद्दशवाक्यप्रतिपाद्यत्वेनाभिप्रेयते । ततश्चाभेदनिषेधपरं तद्वाक्यम्। अभेदश्च जीवेशयोः प्रमाणान्तरेणासिद्धः । तन्निषेधेऽप्रसिद्धप्रतियोगिकनिषेधबोधकत्वात्तद्वाक्यमलब्धात्मकं निरर्थकं च। तथैव ताद्दशानि वाक्यान्तराणि च बहूनि । किंबहुना शास्त्रमेव निरर्थकम् । ब्रह्मोत्कर्षस्यातिप्रतिपन्नत्वेन जीवेशभेद एव

इत्थं जीवब्रह्मभेदे निरस्ते
शास्त्रारम्भस्थापनार्थं त्वदिष्टे ।
जीवाभेदेऽप्यावृतत्वाद्विचार्यं
ब्रह्मेत्यस्मद्रीतिरेवाऽऽश्रयस्ते ॥ ३३ ॥

व्या०—"आयुराशास्ते । सुप्रजास्त्वम्" इत्यादिसूक्तवाकमन्त्रार्पितायुरादिकं दर्शपूर्णमासाङ्गं, प्रस्तरप्रहरणं पुरुषापेक्षमात्रेणौपासनादिकर्मसूपसंहारार्थं भवेत् । अपि च शब्दान्तरादयः कर्मणि भेदका भवन्तु मा वा भूवन् । ब्रह्मणि तु ते भेदका न भवन्त्येव । तथा हि—" एष ह्येव जीवं प्रबोधयति । एतस्माज्जीव उत्तिष्ठति " ( ) इति विरुद्धार्थधातुनिष्पन्नाख्यातरूपस्य शब्दान्तरस्य भेदकत्वमुद्बोधकत्वावच्छिन्नस्योद्बोध्यत्वावच्छेदो विरुद्ध इत्यन्ततो विरोधमूलमेव वाच्यम् । न तु तद्युक्तम् । ब्रह्मणि त्वया विरुद्धधर्मसमावेशस्य बहुधाऽङ्गीकृतत्वात् । " नित्यः परो नित्यो जीवः " इति नित्यत्वाभ्यासस्य परजीवयोरेकत्वे परनित्यत्वश्रुत्यैव जीवस्यापि नित्यत्वसिद्धेस्तत्पुनः श्रुत्यानर्थक्यमूलं वाच्यम् । तदपि न युक्तम् । कार्यकारणाभेदवादिना शक्तिव्यक्त्यभेदवादिना च त्वया नित्यत्वादिसांकर्यस्याङ्गीकृततया तथैव परनित्यत्वेऽपि जीवानित्यत्वं स्यादिति शङ्कावारणेन तत्सार्थकत्वात् । संख्याया गुणस्य च भेदकत्वं " यस्मिन्पञ्च पञ्चजनाः " ( बृ० उ० ४ । ४ । १७ ) " अणोरणीयान्महतो महीयान् " ( क० उ० २ । २० ) इत्यादौ त्वयैव प्रतिषिद्धम् । प्रकरणभेदो न भेदक इति तु स्पष्टमेव । भारतादिषु रामकृष्णादिचरितप्रतिपादकप्रकरणभेदेऽप्यभेदानपायात् । सृष्टिसंहारप्रतिपादकप्रकरणभेदेऽपि त्वया सृष्टिसंहारादिक्रियाणामभेदस्याङ्गीकृतत्वात् । एतेन जीवेशाविति नामभेदस्यापि भेदकत्वं प्रत्याख्यातम् । तस्मात्परस्परविरुद्धधर्मवतामवतारादीनामिव जीवानामप्यभेदश्रुत्यनुसारेणाऽऽपतदत्यन्ताभिन्नवासुदेवांशत्वं त्वया निवारयितुं न शक्यत इति भावः ॥ ३२ ॥

नन्वस्त्वेवं जीवब्रह्मणोरभेदस्तथाऽपि निर्दोषाशेषगुणपूर्णस्य ब्रह्मणो जीवं प्रत्यभेदेऽप्यावृतत्वोपपादनाद्विचार्यत्वं संभवतीति न मन्मते शास्त्रमारम्भणीयमिति परमसिद्धान्तस्य किंचिद्दूषणमिति मन्दशङ्कामपाकुर्वन् सिद्धान्तदूषणमुपसंहरति—इत्थमिति । न वयं सर्वथैव ब्रह्ममीमांसाशास्त्रारम्भमाक्षेप्तुं प्रवृत्ताः ।

टि०—शास्त्रप्रतिपाद्य इति त्वदभिमततया तस्य च तव प्रत्यक्षादिनैव सिद्धेः। वेदान्तानां तदर्थनिर्णायकशास्त्रस्य चापार्थीकरणदोषस्त्वच्छिरसि वज्रलेपायित इत्यलं पल्लवितेन ॥ ३२ ॥

अप्पदीक्षितसुधीविनिर्मिते मध्वदर्शनमुखापमर्दने ।
आदिमाधिकरणस्य दूषणं भूषणं भवतु धीमतामिदम् ॥३४॥

॥ इति जिज्ञासाधिकरणसिद्धान्तदूषणप्रकरणम् ॥

---

व्या०—अस्माभिस्तदारम्भस्य स्थापनीयत्वात् । किंतु ब्रह्मभेदमाश्रित्य ब्रह्मणो विषयत्वोपपादनेन तदारम्भमाक्षेप्तुम् । तदाक्षेपश्च संस्थिर एव । त्वद्रीत्यैव जीवब्रह्मभेदस्य निराकृतत्वात् । अतस्तं पक्षं विहाय जीवाभेदेऽप्यावृतत्वाद्ब्रह्म विचार्यमिति पक्ष आश्रीयते चेत्, साऽस्मद्रीतिरेव न दूषणीया । न च सगुणस्यैव ब्रह्मणः परपक्षे जीवाभेदोपपादनाद्रीतिभेदोऽस्तीति शङ्कनीयम् । परमते गुणगुणिनोर्भेदाभावाद्भेदप्रतिनिधेस्तदाभिमतस्य विशेषस्याऽऽवश्यकब्रह्मशक्त्यैवोपपन्नतया निराकृतत्वात् । अस्मन्मतेऽप्यविद्याशक्तिवशाद्गुणगुणिभावप्रतीतेरिष्यमाणत्वात् । यदाहुः पद्मपादाचार्याः—"आनन्दो विषयानुभवो नित्यत्वं चेति । सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्ते" इति । इयांस्तु विशेषः—जीवे प्रत्यक्षतोऽवभासन्ते । ब्रह्मणि तु "आनन्दं ब्रह्मणो विद्वान्" (तै० उ० २।९) इति श्रुतिबलादवभासन्ते । तस्मात्सिद्धमेतज्जीवब्रह्मभेदावलम्बनेन शास्त्रारम्भसमर्थनमयुक्तमिति ॥ ३३ ॥

---

टि०— जीवाभेद इति । निर्विशेषजीवाभिन्नब्रह्मविषयमादायैव शास्त्रप्रवृत्तिरिति तात्पर्यम् । यत्त्वत्र—जिज्ञास्ये ब्रह्मपदश्रवणात्, "तद्विजिज्ञासस्व । तद्ब्रह्मेति" (तै० उ० ३।१) ब्रह्मशब्दश्च गुणपूर्तितां वक्ति । "अथ कस्मादुच्यते ब्रह्मेति । बृहन्तो ह्यस्मिन्गुणाः" इति श्रुतेः । तथा च कथं तस्य जीवाभेदः । जीवस्याल्पगुणानुभवात्" इति । तन्न । उक्तश्रुतौ जिज्ञास्ये ब्रह्मपदश्रवणेऽपि तस्य जीवभेदासिद्धेः । अल्पगुणवतो घटादेरनित्यत्वदर्शनेन श्रुत्या ब्रह्मणि गुणबाहुल्यबोधनेऽनित्यत्वस्य कैमुतिकन्यायग्रस्तत्वात् । अत एवोक्तं सूत्रकृता—"रूपादिमत्त्वाच्च विपर्ययो दर्शनात्" (ब्र० सू० २।२।१५) इति । उक्तं हि त्वद्भाष्ये—"रूपादिसत्त्वाच्च परमाणूनामनित्यत्वं, तथा दृष्टत्वाल्लोके" इति । यद्रूपादिमत् तस्य घटादेरनित्यत्वदर्शनादिति तत्त्वप्रकाशिका । अतो निर्गुणत्वमेव नित्यत्वप्रयोजकं संमतं च । उक्तं च भगवता कृष्णेन—"अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः" (गी० १३।१८) इति । ततश्च भवन्मार्गस्य मूलक्षतिकरत्वेन ब्रह्मणि गुणानां सत्त्वं नाभ्युपगन्तव्यम् । उक्तश्रुतौ कल्पितगुणानां ब्रह्मणि कल्पितानां बोधकत्वेनाप्युपपत्तेः । वस्तुतस्तु तादृशश्रुतेस्तत्कल्पितत्वं पूर्वमेवोक्तमिति सा नेदानीमुदाहर्तव्या । अतो देशकालवस्तुपरिच्छेदराहित्यमेव ब्रह्मशब्दार्थ इति जीवब्रह्माभेद एव सूत्रकृत्संमतः । न च जीवाणुत्वस्य वक्ष्यमाणत्वेन कथं महतो ब्रह्मणस्तदभेद इति वाच्यम् । ब्रह्मगुणानामिवाणुत्वस्यापि मिथ्यात्वस्याऽऽबाढवातन्याय-

व्या०— ॥ अथ जन्माद्यधिकरणदूषणप्रकरणम् ॥

जन्मादिसूत्रे परकीयमधिकरणं यदुक्तं—“ तद्विजिज्ञासस्व । तद्ब्रह्म ” ( तै० उ० ३ । १ ) इति विचारविधिवाक्ये ब्रह्मपदेन जीवविलक्षणस्य ब्रह्मणो विचार्यस्य समर्पणात्सविषयमिदं शास्त्रमिति । तन्न घटते । तत्र ब्रह्मपदस्य जीवपरत्वात् । तथा हि—“ ब्रह्मशब्दस्तावज्जीवस्यापि वाचकः । बृह बृहि वृद्धाविति धाताविव ‘ बृह—जातिजीवकमलासनशब्दराशिषु ’ इति धातोरपि मनिन्प्रत्यये सति ब्रह्मशब्दनिष्पत्तेः । तस्य च जीववाचकत्वं रूढ्यैव । जीवे गुणपूर्त्यादियोगासंभवात् । परब्रह्मवाचकत्वं तु योगेन । ततश्च रूढेर्योगतो बलवत्त्वादिह ब्रह्मशब्दस्य जीवपरत्वमेव युक्तमिति पूर्वपक्षे । राद्धान्तः—सत्यं रूढिर्बलीयसी । इह त्वस्य बाधकं जागर्ति । ‘ यतो वा इमानि भूतानि जायन्ते ’ (तै० उ० ३।१) इत्यादौ श्रुतं ब्रह्मपदनिर्देश्यस्य जगज्जन्मादिकारणत्वम् । तद्धि विष्ण्वेकनिष्ठमिति तल्लक्षणमिति श्रुतिस्मृतिपुराणादिभ्योऽवगतम् । अतस्तदनुसारेण योगतः परिपूर्णगुणविष्णुपर एवायं ब्रह्मशब्दः” इति ।

तत्र पूर्वपक्षोक्ता ब्रह्मशब्दस्य जीवे रूढिरसिद्धा । शरीरबृंहकत्वादिक्लृप्तयोगेनैव तत्र प्रवृत्त्युपपत्तेः । धात्वन्तरस्य चाप्रामाणिकत्वादिति दूषणं स्पष्टमे-

टि०—ग्रस्तत्वात् । अणुत्वादिप्रतिपादकश्रुतीनां भगवत्पादैरेव तद्गुणसारत्वाधिकरणे गतिवर्णनान्नात्र लेखनीं व्यापारयामः । एवं च जीवेशाभेदमादायैव शास्त्रारम्भः समर्थनीय इति शिवम् ॥ ३३ ॥ ३४ ॥

इति टिप्पण्यां जिज्ञासाधिकरणदूषणं समाप्तम् ॥

१ निष्पत्तेरिति । बृहि वृद्धाविति धातोः “ बृंहेर्नोऽच्च ” ( उणादिसू० ५८५ ) इत्यौणादिकसूत्रेण मनिन्प्रत्यये नोऽकारे उर्यणि च ब्रह्मशब्दनिष्पत्तिवत्, बृह—जातिजीवकमलासनशब्दराशिष्विति धातोस्तादृशरूपानिष्पत्तिः । ‘ तदनुबन्धकग्रहणे ’ ( परिभा० ८४ ) इति न्यायेन तादृशसूत्रस्य तत्राप्रवृत्तेः । तथाऽप्यभ्युपगम्य तथोक्तिरिति भावः । एतेन “ बृहि वृद्धौ ” इति धातोः “ बृंहेरम् नलापश्च ” इति मनिन्प्रत्ययेऽमागमे नलोपे च ब्रह्मेति रूपम् ” इति प्रलपनं परास्तम् ।

२ असिद्धेति । उक्तब्रह्मशब्दस्य संकोचे प्रमाणाभावेन देशकालवस्तुपरिच्छेदराहित्यविशिष्टं वस्त्वेवार्थः । उक्तपरिच्छेदवतो घटादेरब्रह्मत्वदर्शनाच्च । ततश्च भगवत्पादीयभाष्योक्तयोगमर्यादया निर्विशेषब्रह्माभिन्ने “ बृहत्वाद्बृंहणत्वाद्वा ” इत्यादिभामत्युक्तया तया सविशेषे च जीवे तस्य प्रवृत्ते रूढिरसिद्धेति भावः । एतेन “ यत्केनचित्प्रलपितं ‘ विष्णौ पुष्कलयोगेन मुख्यत्वमन्यत्र तदभावेनामुख्यत्वमिति सिद्धावपि लोकरूढ्या

तद्ब्रह्मेत्यस्य रूढ्या तनुधरपरतामुज्झतोऽनूक्त्ययोगा-
त्किं न्वन्नाद्येषु युक्ता भवति तव मते सा यतो वेत्यनूक्तिः।
ब्रह्मैक्यात्तेषु युक्ता यदि किमिति तदा जीववर्गे न युक्ता
जीवान्भेदेऽप्याभिन्नानपि कथयसि भो ब्रह्मणा तद्गुणेन ॥३५॥

व्या०·· वेति मत्वा सिद्धान्तं दूषयति तद्ब्रह्मेति—यदि जगत्कर्तृत्वानुवादस्य जीवे पर्यवसानायोगाद्विचारविधिवाक्यगतस्य ब्रह्मशब्दस्य रूढ्यर्थो जीवः परित्यज्यते, तदा येष्वन्नप्राणमनोविज्ञानानन्देषु तस्य ब्रह्मशब्दस्य वृत्तिस्तवाभिमता तेष्वपि वृत्तिरियं तव परित्यक्तव्या स्यात्। जगत्कारणत्वानुवादपर्यवसानासंभवस्य तेष्वपि तुल्यत्वात्[1]। तथा हि—वरुणेन ब्रह्मविद्यार्थमुप-

टि०—जीवपरत्वे बाधकाभावः। एतादृशशङ्कायाः क्वचिन्निराकर्तव्यत्वात्। अस्मिन्नेवाधिकरणे पूर्वपक्षं कृत्वा तन्निरासात्। रूढाववान्तरभेदस्याद्याप्यसिद्धेश्चेति' तत्परास्तम्। लोके ब्रह्मशब्दस्य जीवे रूढिग्राहकप्रमाणाभावेन तादृशशङ्काया एवानुदये तन्निराकरणार्थं प्रकृताधिकरणे प्रयासानौचित्यात्। देहबृंहकत्वादिरूपयौगिकार्थेनैव ब्रह्मशब्दस्य जीवे प्रवृत्त्युपपत्तेः। ननूक्तयौगिकार्थस्य मानाभावात्, गुणपूर्त्यादेर्जीवेऽसंभव इति कथं योगमर्यादया तत्र ब्रह्मशब्दप्रवृत्तिः। किंचास्मदाचार्येण सर्वज्ञतमेनोदाहृतस्य चिरंतनव्याकरणसिद्धाभिधानस्य संभवात्। तस्य चार्वाचीनेन त्वयाऽपलपितुमशक्यत्वादिति चेन्न। देहबृंहकत्वरूपार्थे पूर्वोक्तवचनस्यैव प्रमाणत्वात्। योगार्थगुणपूर्तेस्त्वत्साक्षिमात्रगम्यश्रुतिकल्प्यायाः शास्त्रीयव्यवहारानुपयोगात्। ईश्वरव्यतिरिक्तसर्वज्ञे विप्रतिपत्त्योक्तधातुपाठाभिधानस्य सर्वज्ञतमोदाहृतत्ववचनस्याज्ञानविजृम्भितत्वात्। धातोः क्रियावाचकत्वनैयत्येन बृहधातोर्जात्यादिपरत्वोक्तेरतीव गर्ह्यत्वात्। अपि च "रूढिर्लब्धात्मिका योगं बाधते न त्वलब्धिका। तत्रैव चाऽऽत्मलाभोऽस्या यत्र नावयवार्थता" (        ) इत्यभियुक्तोक्त्याऽवयवार्थवतो ब्रह्मशब्दस्य रूढ्यनुन्मेषात्। उन्मेषे च बृहत्त्वादिवचनमूलरूढेर्योगमूलत्वेन विद्वद्रूढितया प्राबल्यात्त्वदुक्तरूढ्या प्रकृताधिकरणपूर्वपक्षस्य तव मतेऽनुत्थितिरिति यत्किंचिदेतत्॥

१ तुल्यत्वादिति। ब्रह्मशब्देन यदि जीवो विवक्षितः, तर्हि जगत्कारणत्वमपि पूर्ववाक्योक्तं तस्मिन्नेव स्थापनीयम्। तच्च यथा परिच्छिन्नशक्तिके जीवे न संभवति, तथा परिच्छिन्नान्नमयादिकोशाधिष्ठातृष्वनिरुद्धादिष्वपि न युज्यते। यदि "एतन्नानावताराणां निधानं बीजमव्ययम्" (                ) इति पुराणवचनानुसारेणैतेषां मूलरूपाभिन्नत्वेन तद्युक्तमित्याशंससे, तर्हि तद्ब्रह्माभिन्ने जीवेऽपि युक्तं तौल्यादिति भावः। ननु विष्णोर्नानारूपत्वेऽपि सर्वरूपाणां सर्वगुणयुक्तत्वेऽप्यनभिव्यक्तिमात्रेण तत्तद्व्यापाराणां

व्या०—सन्नं भृगुं प्रति यज्जगज्जन्मादिकारणं तद्ब्रह्म तपसा विजिज्ञासस्वेत्युपदिष्टे सोऽपि तपसैवान्नं जगज्जन्मादिकारणं ब्रह्मेत्यवगम्य पुनः पुनर्गुरूपसत्त्या क्रमेण प्राणं मनो विज्ञानमानन्दं तथाऽवगतवानिति भृगुवल्ल्यां श्रूयते । तत्र " आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते " ( तै० उ० ३ । ६ ) इत्यानन्दवाक्यमेव प्रथमं सामान्यतो लक्षणमुखेनोपदिष्टस्य ब्रह्मणो निर्णयवाक्यम् । आनन्द एव च जगज्जन्मादिकारणं मुख्यं ब्रह्म । अन्नादयस्तु चत्वारोऽपि कोशाः 'अन्नं ब्रह्मेति व्यजानात् । अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते ' ( तै० उ० ३ । २ ) इत्यादीनि च स्थूलारुन्धतीन्यायेन प्रवृत्तानीत्यस्माकं मतम् । तव तु " अन्नादिवाक्यानि पञ्चापि तन्निर्णायकानि । अन्नादिषु पञ्चस्वपि ब्रह्मशब्दस्य जगत्कारणत्वलक्षणयोजनस्य च दर्शनात् । [1]पुनः पुनरुपसत्तिस्त्वन्नमयादिकोशानां पञ्चानां ब्रह्मरूपाणां मध्ये पूर्वपूर्वरूपापरोक्षीकरणानन्तरमुत्तरोत्तररूपापरोक्षीकरणार्थं तपोनुज्ञाप्राप्तये, प्रतिपर्यायं " तद्विज्ञाय । पुनरेव वरुणं पितरमुपससार " । तपसा ब्रह्म विजिज्ञासस्व " इति च श्रवणात् " इति मतम् । एवं च तव मते "एतन्नानावताराणां निधानं बीजमव्ययम्" ( ......... ) इत्यादिपुराणप्रसिद्धेन मूलरूपेणैव ब्रह्मणश्चतुर्मुखादिसकलभूतजातजन्मादिकर्तृत्वं, न तु प्रतिशरीरं कोशाधिष्ठातृतयाऽभिव्यक्तैरित्यन्नादिष्वप्यनुवादयुक्तिस्तुल्यैव । यद्यपि तव मते सर्वाणि भगवद्रूपाणि सविशेषाभिन्नानि,

टि०—व्यवस्थाऽङ्गी क्रियते । " अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते " ( गी० १० । ८ ) इत्यादिस्मृतेः । " न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि " ( ब्र० सू० ३।२।११ ) इत्यादौ सर्वरूपाणां निर्दोषाशेषसद्गुणत्वस्य सूत्रकृतैव प्रतिपादितत्वाच्चान्नमयादीनां तद्रूपाणां युक्तं जगत्कारणत्वं न जीवस्य, अतद्रूपत्वादिति चेदनधिगतभावोऽसि । अन्नमयादीनां ब्रह्मरूपत्वमभ्युपगम्य ब्रह्मगुणानां तत्र केषांचिदभिव्यक्तिः केषांचिन्नेति कल्पने जीवेऽपि ब्रह्माभिन्ने सत्त्वचेतनत्वादीनां तद्गुणानामभिव्यक्तिरन्येषामनभिव्यक्तिरिति कल्पनसंभवादित्यभिप्रायात् । एतेन " जीवे कारणत्वयोजनमप्रामाणिकं सर्वप्रमाणाविरुद्धं च " इत्यपास्तम् । मूलरूपाभेदप्रमाणबलादन्नमयादीनामिव जीवब्रह्माभेदप्रमाणबलेन जीवस्यापि कारणत्वसंभवेन तद्व्यावृत्त्ययोगात् । तस्माद्ब्रह्मशब्दस्योक्तरूढित्यागायोगेन सिद्धान्तानुत्थितिरिति हृदयम् ॥

१ ननु पञ्चानां ब्रह्मत्वेऽन्नस्य प्राणस्य वा ब्रह्मणो ज्ञानेनेष्टलाभे पुनः पुनरुपसत्तिर्व्यर्था स्यादत आह—पुनः पुनरुपसत्तिरिति । एतेन पञ्चानामपि ब्रह्मणामत्यन्ताभेद इति मध्वसिद्धान्तासिद्धिः सूचिता ॥

यतो वेत्याद्युक्तिः कथमिव हि जीवे न घटते
कथं तद्ब्रह्मेतिश्रुतिरपसरेद्रूढिविषयात् ।
जगत्स्रष्टुं सर्वं प्रभवति खलु ध्यानविषयः
समस्तोऽयं मानोरथिक इति जीवस्तव मते ॥ ३६ ॥

---

व्या०—तथाऽपि तत्तत्कृत्यानि व्यवस्थितान्येव। न हि रावणवधादिकं शिशुपालवधादिकृष्णचरितमध्ये वर्ण्यते ।

स्यादेतत्। तात्त्विकाभेददृष्ट्या रूपान्तराविष्कृतोऽपि महिमा रूपान्तरे वर्णयितुं युक्तः । "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" ( गी० १०।८ ) इत्यादिकृष्णवाक्यश्रवणात् । रावणवधादेः कृष्णरूपाविष्कृतचरितमात्रसंग्रहप्रस्तावेष्ववर्णनेऽपि सर्वरूपाभिमानिपरब्रह्मरूपतया कृष्णवर्णनप्रस्तावेषु कृष्णेऽपि वर्णनदर्शनाच्च । अतोऽन्नादिरूपेषु मूलरूपाभेददृष्ट्या जगत्कर्तृत्वानुवादो युक्त इति चेदेवं तर्हि जीवेऽपि स युक्त एव । जीववर्गोऽपि ज्ञानानन्दादिब्रह्मगुणशालितया ब्रह्माभिन्न इति त्वयाऽङ्गीकृतत्वात् । 'तत्त्वमसि' इति जीवे प्रकृतजगत्कर्तृपरामर्शितत्पदोक्तब्रह्माभेदप्रतिपादनस्य ज्ञानानन्दादिगुणैक्यप्रयुक्ताभेदविषयतया "सर्वं खल्विदं ब्रह्म" ( छा० ३ । १४ । १ ) इति ब्रह्मणि सर्वप्रपञ्चाभेदप्रतिपादनस्य "सर्वभूतगुणैर्युक्तम्" ( ......... ) इति स्मृतेः पृथिव्यादिगतधारकत्वादिगुणा ब्रह्मणि सन्तीति तत्तद्गुणैकरूपरूप्यप्रयुक्तपृथिव्याद्यभेदविषयतया च त्वया "तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्" ( ब्र० सू० २ । ३ । २९ ) इति सूत्रे व्यवस्थापितत्वाच्चेति भावः ॥३५॥

एवं यतो वेत्यादिनाऽनुवाद्यस्य ब्रह्मणि सतः कारणत्वस्य तदभेददृष्ट्या जीवे वर्णनं युक्तमिति प्रतिपादितम् । इदानीं साक्षादपि जीवे तदनुवाद्यं संभवतीत्याह—यतो वेति । इत्थं हि तव मतम्—स्वस्वध्यानमनोराज्येष्वनुभूयमानाः सरि-

---

टि०— १ तद्गुणसारत्वादिति । अत्र त्वदीयं भाष्यम्—"ज्ञानानन्दादिब्रह्मगुणा एवास्य सारः स्वरूपम् । अतोऽभेदव्यपदेशः । यथा सर्वगुणात्मकत्वात्सर्वात्मकं ब्रह्मोच्यते—"सर्वं खल्विदं ब्रह्म" इति । एतेन जीवस्य ब्रह्मगुणवत्त्वकथनेन त्वदाचार्याणामपि जीवब्रह्माभेद एवैकान्ततः संमत इति व्यज्यते । अन्यगुणानामन्यत्र सत्त्वायोगेन ज्ञानानन्दादीनां जीवेऽभ्युपगमे तथात्वावश्यंभावात्" इति ॥ ३५ ॥

२ यतो वेति । तव मते ध्यानाविषयोऽयं समस्तो नद्यादिर्मानोरथिक इति हेतो-

स्थूलप्रपञ्चो यदि चानुवाद्यः सोऽप्यस्ति ते ध्यानमनोरथार्थः ।
सन्त्येव तत्राप्यतिदुर्घटानि सर्वापरोक्षादिषु को विरोधः ॥३७॥

---

व्या०—त्समुद्रगिरिनगरगजतुरगादयो न बहिः सन्तः। नापि भ्रान्तिमात्रविषयाः, किंतु स्वप्नादिद्रष्टृपुरुषान्तःकरणगतानादिकालप्रवृत्ततत्तद्विषयानुभवजन्यवासनोपादानास्तदानीमेवान्तरुत्पन्नास्तत्र ध्यानमनोरथविषयाः पुरुषप्रयत्ननिर्वर्तिता न स्वप्नविषया इति । तदुक्तं न्यायसुधायाम्—" संध्ये सृष्टिराह हि " ( ब्र० सू० ३ । २ । १ ) इत्यधिकरणे यथा मनोरथे ध्याने च संस्कारयोनीनर्थान्मनसाऽनुभवति, एवं स्वप्नेऽपीति किमनुपपन्नम् । इयांस्तु विशेषः—मनोरथादौ प्रयत्नपूर्विका पदार्थसृष्टिः, स्वप्ने पुनरीश्वरेच्छाधीनैवेति " । तत्रैव प्रथमसूत्रेऽपि ध्यानं मानसी क्रियेति शङ्कानिराकरणार्थमुक्तं—यदि क्रिया परिस्पन्दस्तर्हीन्द्रियाश्रितोऽतीन्द्रिय इत्यपरोक्षावभासाविरोधः । रूपरहितत्वेन तदवभासाविरोधश्च । यदि च मानसी सृष्टिरिति च मतं—अनुमतमेतत् । श्रवणदर्शनादिजनितमानसवासनामयस्य वस्तुनो मानसावलोकनं ध्यानमित्यङ्गीकारात् । अतीन्द्रियोपादानकस्यापि द्रव्यस्यातीन्द्रियत्वाभावस्त्र्यणुकादेरिवोपपद्यते । नीरूपाद्वायो रूपवत्तेजसो जन्म वेदान्तिनां प्रसिद्धमेवेति " । एवं ध्यानमनोरथयोरसंभावितो विषयः कोऽपि नास्तीति । तद्विषयस्रष्टृजीवे साक्षादप्यनुवाद्यान्वयः संभवतीति भावः ॥ ३६ ॥

ननु "यतो वा इमानि" ( तै० उ० ३।१ ) इति दर्शनाद्वक्तृश्रोतृसाधारणसकलस्थूलप्रपञ्चस्रष्टृत्वमनुवाद्यम्। तत्तु जीवे न संभवतीत्याशङ्क्याऽऽह—स्थूलप्रपञ्चेति । स्थूलप्रपञ्चस्रष्टृत्वमपि जीवस्य संभवति । तस्य चिरंतनाहिरण्यगर्भादिजीवध्यानमनोरथादिप्रभवत्वोपपत्तेः । न चेश्वरस्य स्रष्टृत्वश्रुतिविरोधः । तस्यापि प्रपञ्चान्तरस्रष्टृत्वेन घटादिष्विव ध्यानजादिष्वपि स्रष्टृत्वेन च तदुपपत्तेः । न च वासनामयत्वे सर्वापरोक्ष्यसर्वार्थक्रियाकारित्वादिविरोधः । अतिसूक्ष्मवासनोपादानत्वेऽपि स्वप्नध्यानमनोरथादिविषयाणां भूगोलकमहार्णवादीनामतिमहत्त्वम् । एतेषां च स्वल्पशरीरावस्थानम् । मुहूर्तमात्रानुवृत्तिषु स्वप्नध्यानमनो-

---

टि०— जीवः सर्वं जगत्स्रष्टुं हि यतः प्रभवति । अतो यतो वेत्याद्युक्तिः कथमिव जीवे न घटते । कथं तद्ब्रह्मेति श्रुतिरपि रूढिविषयादपसरेदिति योजना ।

१ प्रसिद्धमेवेति । एवं च मनोजन्यानामपि नदीनगरसमुद्रादीनां वायुजन्यतेजोवत्प्रत्यक्षविषयत्वं संभवतीति भावः ॥ ३६ ॥

यद्येवं रोचयेथाः कथमपि न गतिं स्वेष्टसंसिद्धबुद्ध्या
लब्धुं ते वृद्धिमृद्धां ध्रुवमभिलषतो मूलमेव प्रणश्येत् ।
अत्यन्ताभेद एव परतनुधरयोरापतेत्तद्विरोधे
राजन्योक्थ्यादिरीत्या बत विपरिणमेद्बाध्यतेऽत्रानुवाद्यम् ॥ ३८॥

---

व्या०—राज्यादिष्वनेकशतवर्षादिवहनमित्यादेरपि दुर्घटस्य दर्शनेन तद्वदेव ध्यान-मनोरथप्रभवे प्रपञ्चे सर्वापरोक्ष्यादेरप्यविरोधात् । वासिष्ठरामायणे भार्गवनन्दन-मनोराज्यादिविषयप्रपञ्चेषु सर्वापरोक्ष्यादेर्वर्णितत्वेन मनोराज्यादिसृष्टिमङ्गीकुर्व-तस्तव तदनुसरणौचित्याच्चेति भावः ॥ ३७ ॥

नन्विदं जीवेऽनुवाद्यसमर्थनप्रकारद्वयमप्ययुक्तम् । आद्ये हि प्रकारे महावा-क्यार्थोऽपि गौणः। द्वितीये त्वनुवाद्यपरावान्तरवाक्यार्थः । तथा हि—ब्रह्मपदस्य जीवपरत्वे परजीवयोरभेदो महावाक्यार्थः। स च जगज्जन्मादिकारणत्वजीव-त्वावच्छिन्नाभेदो मुख्यो न संभवतीति ताभ्यां रूपाभ्यां तयोर्भेदाङ्गीकारात् । यस्तु ज्ञानानन्दत्वादिरूपेणाभेदः संभवतीत्युक्तः स तु गौणः। शब्दानुपात्तधर्माव-च्छिन्नत्वात् । अत एव प्रबलश्रुतिभिर्भेदसिद्धेः "तत्त्वमसि" ( छा० ६।८।७ ) इति वाक्यं गौणाभेदपरमित्येव " तद्गुणसारत्वात् " ( ब्र० सू० २ । ३ । २९ ) इति सूत्रे दर्शितम् । न चेह तथा गौणो वाक्यार्थः स्वीकार्यः । ब्रह्म-पदमात्रस्य योगेन परब्रह्मपरत्वे मुख्यवाक्यार्थलाभात् । एवं जगत्कारणत्वमनुवाद्य-परावान्तरवाक्यार्थः । तच्चासंकुचितं वेदप्रसिद्धं ग्राह्यम् । बलवत्संकोचकाभावा-त् । वेदप्रसिद्धिसत्त्वे तस्यैव वेदेनानुवदितुं युक्तत्वाच्च । न च जीवानां ध्यान-मनोरथादिविषयस्रष्टृत्वमसंकुचितम् । जीवान्तरध्यानादिविषये जीवान्तरस्य स्रष्टृत्वाभावात् । नापि " तत्तेजोऽसृजत " ( छा० ६।२।३ ) इत्यादिवद्वेद-प्रसिद्धम् । न च ब्रह्मपदमात्रस्य रूढित्यागेन मुख्यानुवाद्यग्रहणसंभवे तत्त्यागो युक्त इत्याशङ्क्याऽऽह—यदीति ।

---

टि०— १ वासिष्ठरामायण इति। तत्र हि स्थितिप्रकरणे पञ्चमसर्गे रामं प्रति वसिष्ठोक्तिः " पुरा मन्दरशैलस्य सानौ कुसुमसंकुले । अतप्यत तपो घोरं कस्मिंश्चिद्भगवान्भृगुः " इत्युपक्र-म्य षष्ठे सर्गे "आरब्धवान्मनोराज्यमिदमेकः किलोशनाः" इति भार्गवमनोराज्यादिसृष्टिं द्वित्र-सर्गैरभिधायोपसंहारः कृतः । तन्मध्ये " अथ सादरमुत्थाय शुक्रः शक्रेण पूजितः " इति तत्सृष्टस्येन्द्रप्रत्यक्षविषयत्वं, " इत्युक्त्वा पुष्पमृद्वङ्गी सा तस्य पतितोरसि " इत्यादिना

व्या०—जीवे कथंचिद्योजितमिदं प्रकारद्वयमपि ब्रह्मपदरूढित्यागेन स्वेष्टं लब्धव्यमिति लोभाद्यदि न रोचयेथास्तदा वृद्धिमिच्छतो मूलमेव नष्टमिति न्याय आपतेत् । उक्तप्रकारद्वयानङ्गीकारे ह्यनुवादब्रह्मपदस्वारस्यविषययोर्जीवपरयोर्विरुद्धधर्मवत्तया ताभ्यामुपस्थितयोरपि "यतो वा" इत्यादिमहावाक्यप्रामाण्यादत्यन्ताभेदः प्राप्नोति । विरुद्धधर्मवत्त्वस्य तयोरभेदाविरोधिताया: प्रथमाधिकरणभङ्गे प्रपञ्चितत्वात् । अविरोधे च मुख्यार्थत्यागायोगात् । यदि तु तस्याभेदविरोधित्वमेवेत्यभिमानस्तदाऽत्यन्तमेव त्वन्मतमूलहानिः । तथा ह्यनुवाद्यरूपतया जीवब्रह्मसमर्पकस्य भागद्वयस्य महावाक्यार्थभूताभेदपरिपन्थिधर्मिद्वयोपस्थापकतया विरोधे सत्यप्यविरोधाय कस्यचिद्भागस्यार्थबाधे कर्तव्ये विधेयभागस्य तात्पर्यवत्तया प्रबलत्वात् । "न विधौ परः शब्दार्थः" इत्यनुवाद्यस्वारस्यसिद्धये विधावमुख्यार्थपरिग्रहस्य न्यायविद्भिर्निराकृतत्वाच्चानुवादभागस्यैवार्थबाधः प्राप्नुवञ्जीवगतध्यानादिविषयस्रष्टृतागोचरत्वलक्षणस्य संकोचकरूपबाधस्य त्वदसंमततया गत्यन्तराभावाद्ब्रह्मण्येवानुवाद्ये जीवाभेदपरिपन्थिजगत्कारणत्वोपमर्दात्मा बाधः प्राप्नोतीति । दृष्टश्च पूर्वतन्त्रेऽप्यनुवाद्यगतधर्मस्य विधेयविरोधेनोपमर्दः । अत्र हि "उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात्सति हि संस्थान्यत्वम्" (जै० सू० १०.५.४९) इत्यधिकरणेऽग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्य इति राजकर्तृकयोरुक्थ्याग्निष्टोमयोर्विधीयमानः षोडशिग्रहः स्तुतशस्त्ररहितः स्यात् । तद्वत्त्वे षोडशिसंस्थयोक्थ्याग्निष्टोमसंस्थाप्रसङ्गेनोक्थ्यस्याग्निष्टोमस्य च सतः षोडशिग्रहविध्ययोगादिति पूर्वपक्षं कृत्वा सिद्धान्तितम्—स्तुतशस्त्रवत्त्वेन निर्ज्ञातः षोडशिग्रहस्तत्र विधीयमानस्तथैव प्राप्नोति । न च संस्थाभङ्गो दोषः। पूर्वसंस्थोपमर्देन संस्थान्तरविध्युपपत्तेः । "उक्थ्यसंस्थो हि यः प्राप्तस्तथाऽग्निष्टोमसंस्थकः । राजन्यस्य तथा नासौ किंतु षोडशिसंस्थकः" (      ) इत्येवं विधेः पर्यवसानामिति । एवं षोडशिग्रहविध्यर्थप्राप्तेनापि स्तुतशस्त्रेण यदा तद्विरोधिनोरनुवाद्ययोरुक्थ्याग्निष्टोमसंस्थयोरुपमर्दस्तदा किमु वक्तव्यं साक्षाद्विधीयमानजीवत्वेन तद्विरुद्धस्यानुवाद्यस्य जगत्कारणत्वस्योपमर्द इति। एवं च पूर्वोक्तप्रकारद्वयानङ्गीकारे जीवपरयोरत्यन्ताभेदप्रसक्त्या त्वदभिमतभेदहानात् । विरुद्धधर्मवतोरत्यन्ताभेदो न संभवतीत्यनुशये ब्रह्मणो जगत्कारणत्वस्यापि हानाच्च त्वन्मतस्य मूलहानिरेव स्यादिति भावः ॥ ३८ ॥

टि०—तस्याप्सरोभिर्दर्शनपूर्वकं भोगादिकं शुक्रस्यानेकजन्मादिप्राप्तेः कालेन दर्शनं च स्पष्टं वर्णितमस्ति ॥ ३७ ॥

१ प्रपञ्चितत्वादिति । २१ । २९ श्लोकव्याख्यानावसरेऽर्जुनाखण्डलादिदृष्टान्तेनेत्यादिः ॥ ३८ ॥

उक्थ्याग्निष्टोमसंस्थापरिकरविधयो विप्रजाताविवैते
सर्वस्रष्टृत्ववादाः परपरिपठिताः सन्तु कस्मिन्कृतार्थाः ।
अत्रैवाऽऽरोपबाधद्वितयमनुभवन्त्वद्वितीयत्वसिद्ध्यै
चित्यग्नावाग्निहोत्रे विधय इव पयःशस्तये जर्तिलादेः ॥३९॥
तद्ब्रह्मेत्येक एव प्रभवति निखिलस्रष्टृतावादवृन्दं
विष्णोर्नानाश्रुतिस्थं विधिरपवदितुं त्वन्मते पूर्वरीत्या ।
सर्वाद्वैतश्रुतिभ्यो यदि हि स बलवान्यौगिको ब्रह्मशब्दः
सर्वद्वैतश्रुतिभ्यः कथमिव न भवेत्तत्र रूढिं प्रपन्नः ॥ ४० ॥

व्या०— स्यादेतत् । विरुद्धधर्मवतोरत्यन्ताभेदो न संभवत्येव । तथाऽपि नोक्थ्याग्निष्टोमन्यायेन जगत्कारणत्वबाधप्रसक्तिः । तन्न्यायवैषम्यात् । राजन्यप्राप्तयोरुक्थ्याग्निष्टोमसंस्थयोर्बाधेऽपि हि न तदनुबन्धिविधीनामत्यन्तबाधः । वर्णान्तरे चरितार्थत्वात् । ब्रह्मणि जगत्कारणत्वबाधे तु सृष्टिप्रलयादिवाक्यानामत्यन्तबाधः स्याद्विषयान्तराभावात् । तस्मादानर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायाद्विधेयपरस्यापि ब्रह्मशब्दस्य रूढित्यागो लभ्यत इत्याशयवतीमाशङ्कामुन्नाव्य परिहरति—उक्थ्येति । सृष्ट्यादिवाक्यानां विषयान्तरभावो न दोषः । ब्रह्मणोऽद्वितीयत्वसिद्ध्यर्थमध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रसिध्यतीत्युक्तरीत्या ब्रह्मणि कर्तव्यप्रपञ्चापवादापेक्षितेन तदारोपेण चारितार्थ्यम् । दृष्टं च पूर्वतन्त्रे प्रयोजनान्तरसिद्ध्यर्थापवादापेक्षिताऽऽरोपमात्रेण चारितार्थ्यमग्निचयनेऽग्निहोत्रे जर्तिलयवाग्वादिषु तद्वदिहापि स्यादित्यर्थः ॥ ३९ ॥

स्यादेतत् । एकस्य ब्रह्मशब्दस्य रूढिपरिपालनाय यतो वेत्यनुवादस्य तत्पुरोवादानां सृष्ट्यादिवाक्यानां चैवमुपमर्दकल्पनमयुक्तमित्याशङ्क्याऽऽह—तद्ब्रह्मेति । सत्यमेकानुरोधेन बहूनामुपमर्दो न युक्तः । स तु न्यायस्त्वया तद्ब्रह्मेत्यत्र ब्रह्मशब्दे त्यक्तः । त्वया हि पूर्वाधिकरणे ब्रह्मशब्दस्य जीवब्रह्मभेदसाधकत्वमङ्गीकृत्य तेनैकेन पूर्वपक्षाभिमतसकलाद्वैतश्रुतीनां बाधो वर्णितः । तद्रीत्यैवात्र वक्तुं

टि०–१ जर्तिलयवाग्वादिष्विति । "जर्तिलयवाग्वा वा जुहुयात् । गवीधुकयवाग्वा वा जुहुयात्" इत्यादौ जर्तिलयवाग्वादेर्होमसाधनत्वस्य " अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्च " इति निन्दायाश्च " अजक्षीरेण जुहोति " इति विध्येकवाक्यतया तद्वाक्यस्य तत्परत्वाभावो यथा तद्वदित्यर्थः ॥ ३९ ॥

२ वर्णित इति । एनेन मध्वमते पूर्वापरविरोधः स्पष्टीकृतः । पूर्वाधिकरणे ब्रह्मशब्दस्यो-

किंच श्रुत्येकगम्ये रव इव रसनं साधनं बाधनं वा
कर्तुं शक्तं न मानान्तरमखिलजगत्कर्तरीति स्वरीतिः ।
स्मृत्यारूढां कथं न व्यपगमयति ते लोकदृष्ट्या निरूढा-
मेकत्वायोगशङ्कां परतनुधरयोर्वल्गनं तन्मुधैव ॥ ४१ ॥

---

व्या०—सुशकम् । " तेनैव ब्रह्मशब्देन जीवरूढिन्यायतः प्राप्तेन जगत्कारणब्रह्माभेदबोधपर्यन्तेन सृष्टिवाक्यादिसर्वद्वैतश्रुतीनामुपमर्द इति " । न ह्ययं ब्रह्मशब्दो यौगिकत्वेन बलवान्न तु रूढत्वेनेति वक्तुं युक्तमित्यर्थः ॥ ४० ॥

एवं ब्रह्मविरुद्धगुणवत्त्वमभेदविरोधीति परोक्त्यनुसारेण तथा सत्यनुवाद्यगतविरुद्धगुणवत्त्वस्यैवोपमर्दनं स्यान्न तु विधेयाभेदस्येत्यापादितम् । वस्तुतस्तु परमते जीवब्रह्मणोर्विरुद्धधर्मवतोरप्यभेदबोधने लौकिकविरोधदृष्टिर्न [१]परिपन्थिनी। त्वन्मते परमेश्वरस्याचिन्त्याद्भुतशक्तिमहिम्ना विरोधसमाधानादिति प्रथमाधिकरणदूषणे प्रपञ्चितमेव । अधुना तमेवार्थं युक्त्यन्तरेण साधयति—किंचेति ।

---

टि०—त्पत्तिस्थानीयत्वेन प्राबल्यात्सर्वश्रुतिबाधकत्वमुक्तम् । अस्मिंश्चाधिकरणे तस्य रूढ्या जीवे सावकाशत्वेन निरवकाशजगत्कारणत्ववाचकसकलवेदान्तवाक्यैर्बाध्यत्वमुच्यत इति । अपि चान्तरधिकरणे सावकाशनिरवकाशयोर्निरवकाशं प्रबलमित्यस्य वक्ष्यमाणतयाऽधिकरणमिदं व्यर्थमिति ॥ ४० ॥

१ परिपन्थिनीति । अत्र कश्चिच्चोदयति—जीवपराभेदस्याप्रामाणिकत्वादनेकमानाविरुद्धत्वाच्चाचिन्त्यशक्त्या विरोधघटना नाङ्गी क्रियते । प्रामाणिकस्यैवाचिन्त्यशक्त्या घटनाङ्गीकारात् । अल्पशक्तिजीवाभेदे चाचिन्त्यशक्तेरेव हानिप्रसङ्गेन तयाऽभेदकृतविरोधसमाधानस्य कपोणिगुडायितत्वात् । " नारायणोऽसौ " इत्यादिसमाख्याश्रुतौ स्पष्टं भेदादेः प्रतिपादना· च्चेति " । तत्र ब्रूमः—अन्यत्वेन प्रतिपन्नानां परस्परविरुद्धानामप्यन्नमयादिब्रह्मणामिव जीवब्रह्मणोरप्यभेदस्य पूर्वमेव स्पष्टं व्यवस्थापितत्वात् । " एकमेवाद्वितीयं ब्रह्म " ( छा० ६ । २ । १ ) इत्यादिश्रुतीनामन्नमयादिष्विव " त्वं स्त्री त्वं पुमानसि " ( श्वे० ४ । ३ ) इत्यादीनां जीवब्रह्मणोरभेदबोधकत्वाविशेषात । न च "त्वं स्त्री" इत्यादेस्तदन्तर्यामिपरत्वमिति शङ्क्यम्, " अन्नं ब्रह्म " इत्यादीनामपि तथात्वापत्तेः । अल्पशक्तिकजीवाभेदेऽपि तस्याचिन्त्यशक्तिमत्त्वाहानस्य पूर्वमेव प्रतिपादनात् । "नारायणोऽसौ" इत्यादिश्रुतेः । " अन्योन्तर आत्मा " इतिवत्कल्पितभेदविषयत्वेनाप्युपपत्तेः । किंच जीवस्य ब्रह्माभेदे तस्यैवाल्पशक्तिकत्वाभावेन ब्रह्मणि तदापादनस्यातीव मौढ्यात् । तस्माद्बहुश्रुतितदनुसारिन्यायैरेवाद्वैतब्रह्मात्मैक्यसिद्धावद्वैतद्वेषं स्मृत्वा श्रुतेरपार्थं वदन्प्रामाणिकैर्दूरतस्त्याज्य इति दिक् ।

व्या०–श्रोत्रैकगम्ये शब्दे रसनेन्द्रियस्येव वेदैकगम्ये ब्रह्मणि मानान्तरस्य साधकत्ववद्बाधकत्वमपि हि नास्तीति त्वन्मर्यादा सा च " श्रुतेस्तु शब्दमूलत्वात् " ( ब्र० सू० २ । १ । २८ ) इत्यधिकरणे त्वया दर्शिता । इत्थं किल तदधिकरणम्--' ईश्वरो जगत्कर्ता चेत्क्षुद्रकार्येषु कृत्स्नशक्त्या प्रवर्तते तदेकदेशेन वा । नाऽऽद्यः । क्षुद्रकार्येष्वपि कृत्स्नशक्त्या प्रवृत्तौ तस्य प्रेक्षावत्त्वहानिप्रसङ्गात् । न द्वितीयः । तस्य निरवयवत्वात् । तस्माज्जीवस्य स्वतन्त्रकर्तृत्वे यदुक्तं कृत्स्नप्रसक्त्यादिदूषणं तदीश्वरस्य स्वतन्त्रकर्तृत्वेऽपि तुल्यम् । न चेश्वरस्य निरवयवत्वेऽपि सांशतया बहुत्वशालित्वादेकदेशेन कर्तृत्वोपपत्तिः । " व्यतिरेको गन्धवत् " ( ब्र० सू० २ । ३ । २६ ) इत्यधिकरणे जीवानामपि सांशताया व्यवस्थापितत्वेन तौल्यात् । जीवस्यांशांशिभावेन बहुत्वाङ्गीकारे बहुत्वस्य भेदव्याप्तत्वेन भेदस्यापि प्रसक्त्या पुनरपि स एव निरवयवत्वशब्दव्याकोप इति तदाक्षेपे, ईश्वरेऽपि तथैवाऽऽक्षेपसंभवात् । विशेषवशादीश्वरस्यांशांशिभावेन बहुत्वोपपादने जीवेऽपि तथैव तदुपपादनसंभवात् । भेदेनोपपादनीयस्यांशांशितया बहुत्वस्य चेतने विशेषेणोपपादने घटादावचेतनेऽपि तेनैवोपपादनप्रसङ्ग इति तदाक्षेपस्य परमेश्वरसाधारणत्वात्, इति प्राप्ते राद्धान्तः–वेदैकगम्ये ब्रह्मणि यथाश्रुति यस्य कस्यचिदर्थस्याङ्गीकारे लौकिकाः शुष्कतर्का न प्रतिभटी भवितुमीशते । नहि श्रोत्रैकगम्ये शब्दे चक्षुरादिकं साधकं बाधकं वा भवितुमर्हति । अत एव योऽसौ " मनुरमनुरवाग्वागिन्द्रोऽनिन्द्रः प्रवृत्तिरप्रवृत्तिरपरमः परमात्मा " ( ) इति श्रुतिरेव लोकदृष्टिविरुद्धानामपि धर्माणां परमात्मन्यविरोधं बोधयति । तस्मान्मानान्तरगम्यस्य जीवस्य स्वतन्त्रकर्तृत्व एव कृत्स्नप्रसक्त्यादिलौकिकतर्काः प्रवर्तेरन्नेश्वरस्येति यथाश्रुति निरवयवोऽपि परमेश्वरः कार्यानुरूपमेकदेशेन जगन्निर्माणे प्रवर्तते । जीवेनापि निरवयवेन कार्यानुरूपमेकदेशेन कृत्स्नशक्त्या वा कारयतीत्यभ्युपगतौ न कश्चिद्दोषः " इति ।

एवमीश्वरस्य तर्कागोचरत्वेन तस्मिन्निरवयवत्वैकदेशकर्तृत्वयोर्विरोधमपह्नुवानः कथं तस्य जीवाभेदे तर्कागोचरत्वं विस्मरसि । येन लौकिकविरोधमूलान्पुनः पुनः शुष्कतर्कानेवोद्घाटयसि । न च नैते शुष्कतर्काः, किंतु जीवब्रह्मभेदाभेदश्रुत्योर्विरोधभेदश्रुतिप्राबल्यापादकतया वाक्यार्थनिर्णायकश्रुत्यनुग्राहकतर्का एव । न चैतेऽप्युपेक्षणीयाः । मीमांसावैयर्थ्यापत्तेः । तत्रैव "श्रुतेस्तु

इत्यप्पदीक्षितकृतौ मध्वमतारम्भमर्दनग्रन्थे ।

व्या०—शब्दमूलत्वात् " ( ब्र० सू० २।१।२८ ) इति मदीयाधिकरणे " यद्वाक्योक्तं न तद्युक्तिर्विरोद्धुं शक्नुयात्क्वचित् । विरोधे वाक्ययोः क्वापि किंचित्साहाय्यकारणम् " इति स्मृतिमुदाहृत्य वाक्यार्थनिर्णायकतर्काणामुपादेयताप्रतिपादनाच्चेति वाच्यम् । तथा सति जीवब्रह्मभेदश्रुत्यनुग्राहकत्वेन त्वदभिमतानां विरुद्धधर्मवत्त्वमूलतर्काणामपवादकत्वेन तदभेदश्रुतिप्राबल्यापादका जीवे प्रत्यक्षसिद्धकर्मकर्तृत्वस्य ब्रह्मणि श्रुतिप्राप्तसृष्टिपालनसंहारादिकर्मकर्तृत्वस्य च प्रतिक्षेपकतया कर्तृत्वविशेषतदनुबन्धिगुणरूपाञ्जीवब्रह्मणोः सर्वानपि धर्मान्विचारासहान्मिथ्याभूतान्कुर्वन्तः कृत्स्नप्रसक्त्यादितर्का एव श्रुत्यनुग्राहका इत्युपादेयाः, विरुद्धधर्मवत्त्वमूलकतर्कास्तदपोदिताः श्रुत्यननुग्राहकाः शुष्का उपेक्षणीया इति वैपरीत्यस्यैवाऽऽपत्तेः । तस्माद्ब्रह्मणस्तर्कमात्रागोचरत्वाङ्गीकारे शुष्कतर्कगोचरत्वाङ्गीकारे च विरुद्धगुणवत्त्वमूलतर्कगोचरत्वमवश्यंभावि । ब्रह्मणस्तर्कागोचरत्वनिर्वाहाय त्वदुदाहृतश्रुतावपि हि " इन्द्रोऽनिन्द्रः " इत्यपरमः परमात्मेति च तस्यानीश्वरत्वापरमत्वरूपविरुद्धधर्मवताऽपि जीवेनाभेदनिर्देशो दृश्यते । तेनापि तस्य विरुद्धगुणवत्त्वमूलकजीवाभेदप्रतिक्षेपकतर्कागोचरत्वं स्पष्टमेव । अतो न तानुपादाय पुनः पुनर्वल्गनं युक्तमिति भावः ॥

तस्मात्पूर्वपक्षे त्वयाऽङ्गीकृतब्रह्मपदस्य रूढिः कथमपि सिद्धान्ते त्याजयितुं

टि०— १ जन्मादिसूत्रे मध्वमते पूर्वपक्षसिद्धान्तावित्थम्—ब्रह्मशब्दस्य जीवे रूढत्वाद्रूढेश्च योगाद्बलीयस्त्वेन जीव एव " तद्ब्रह्म " इत्यत्रत्यब्रह्मशब्दार्थः स एव जगत्कारणमिति पूर्वपक्षः । ब्रह्मशब्दस्य योगमाश्रित्य विष्णुरेव जगत्कारणमिति सिद्धान्तः । एवं सत्यस्याधिकरणस्यैवानुत्थितिः । प्रथमाधिकरणे मध्वभाष्यम्—' ब्रह्मशब्दश्च विष्णावेव " इति । तत्र तत्त्वप्रकाशिका विष्णावेव मुख्य इति शेषः । ब्रह्मशब्दस्यानेकार्थत्वेऽपि विष्णावेव मुख्यत्वात् । मुख्यस्यैव ग्राह्यत्वात्, स एव सूत्रकारविवक्षितो ज्ञायते । न च ब्रह्मशब्दस्यान्यत्रापि रूढत्वेन रूढेरेव ग्राह्यत्वेन कुतो विष्णावेवासौ मुख्य इति वाच्यम् । अन्यत्राज्ञरूढित्वात् । भगवति च विद्वद्रूढित्वात् । " कवीनां तदेव परमं ब्रह्म " इति श्रुत्युक्तत्वाद्विद्वदविद्वद्रूढ्योर्विद्वद्रूढेरेव मुख्यत्वादिति । आभ्यां भाष्यटीकाभ्यामन्यत्र रूढिनिरासपूर्वकं ब्रह्मशब्दस्य विष्णुरेव मुख्यार्थ इति निर्णीतत्वेन प्रकृताधिकरणे संशयस्यैवानुदयेन पूर्वपक्षसिद्धान्तयोरनुदयात् । इत्येवं दोषे

द्वैतीयीकाधिकरणदूषणमस्तु त्रयीविदां प्रीत्यै ॥ ४२ ॥

इति जन्माद्यधिकरणदूषणप्रकरणम् ।

कथं निरस्या कथय त्वयाऽनुमा प्रसाधयन्तीदमनेककर्तृकम् ।
तथैव तात्पर्यमपि श्रुतेर्हि सा नये तदेकार्थनियत्यभावतः ॥ ४३ ॥

---

व्या०—न शक्यत इति जन्मादिसूत्रसिद्धान्तस्तवासमञ्जस इति सिद्धम् ॥४१॥४२

अथ शास्त्रयोनित्वाधिकरणदूषणप्रकरणम् ।

शास्त्रयोनित्वादिति सूत्रे ( ब्र० सू० १ । १ । ३ ) परस्येत्थमधिकरणम्—"यदुक्तं जगज्जन्मादिकारणत्वं विष्णवेकनिष्ठं तल्लक्षणमिति । तदयुक्तम् । जगदनेककर्तृकं महाकार्यत्वात्प्रासादादिवत् । शिवो जगत्कारणं सर्वज्ञत्वात् । तत एव विरिञ्चिरपि जगत्कारणम् । न च हेत्वसिद्धिः । शिवस्य सर्वज्ञनाम्ना विरिञ्चस्य "ज्ञानमप्रतिघं यस्य (.........) इत्यादिस्मृत्या च तत्सिद्धेः, इत्याद्यनुमानैरन्यत्रापि जगत्कारणत्वावधारणादिति चेन्न । जगत्कारणत्वस्य धर्मादिवच्छास्त्रप्रमाणकत्वाच्छास्त्रस्य विष्णवेकनिष्ठजगत्कारणत्वप्रतिपादकत्वात् । अनुमानस्य संभवदुपाधिप्रत्यनुमानादिदोषशङ्काकलङ्कितस्यादृष्टार्थे स्वतो निश्चायकत्वाभावादिति । तत्र परमते शास्त्रमर्यादयाऽपि जगतोऽनेककर्तृत्वमापतति । तथा तत्तात्पर्यनिर्णायकोपपत्तिरूपलिङ्गतयोदाहृतस्यानुमानस्यैव तदनुग्राहकत्वसंभवात्तत्र तेषां दूषणमयुक्तमित्याह—कथमिति ।

त्वन्मते ह्येकस्य श्रुतिवाक्यस्यैक एवार्थं इति नास्ति नियमः । अतः "सदेव सौम्येदमग्र आसीत्" (छा० ६।२।१)इत्यादिसृष्टिवाक्यानामप्यनेकस्रष्टृपरत्वं संभवति । ततश्च यदि जगतः सामान्यतोऽनेककर्तृकत्वसाधकानुमानं विशिष्य ब्रह्मविष्णुशिवकर्तृकत्वसाधकानुमानानि च तथा तात्पर्यनिर्णायकान्यु-

---

टि०— सत्यपि स्पष्टत्वादुपेक्ष्य पूर्वपक्षसिद्धान्तोन्मेषमङ्गीकृत्य सप्तभिः श्लोकैरुक्तदूषणमुपसंहरति—तस्मादिति । इति शिवम् ॥ ४१ ॥ ४२ ॥

इति टिप्पण्यां जन्माद्यधिकरणदूषणं समाप्तम् ॥

१ साधकानुमानानीति । एतानि "श्रुतिसाहाय्यरहितमनुमानं न कुत्रचित् । निश्चयात्साधयेदर्थं प्रमाणान्तरमेव च" (                ) इति भवद्भाष्यानुसारेण श्रुतिस्मृतिसहितत्वात्तात्पर्यग्राहकाणि । "श्रुतिश्च—यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासञ्छिव एव केवलः" ( श्वे० ४ । १८ ) 'प्रजापतिर्वा इदमग्र आसीत्' (        ) इत्यादिः । स्मृतिश्च "सिसृक्षुरेक एवाग्रे समासीनः शिवः स्वयम्" ( आश्व० स्मृ० )।

कर्मब्रह्मोभयार्थं खलु सकलमपि व्याकरोः कर्मकाण्डं
ब्रह्मस्वार्थोभयार्थानुपनिषदुदितानप्यतद्वाचिशब्दान् ।
अन्यांश्चोमादिवागाद्युभयविधपरान्वाङ्मनःप्राणमुख्या-
न्केन स्याद्वाक्यमर्थत्रयमपरिमितार्थं च वह्न्यादिसूक्तम् ॥४४॥

---

व्या०—पपात्तिरूपतात्पर्यलिङ्गान्यवतरेयुस्तदा तत एवाऽऽपतत्सृष्टिवाक्यानामनेक-कर्तृपरत्वं दुर्वारम् । एवं च जगत्कारणे वस्तुनि साक्षादनिर्णायकान्यप्यनुमानानि तात्पर्यलिङ्गतया " तेजसा सौम्य शुङ्गेन सन्मूलमन्विच्छ " (छा० ६।८।४) इत्यादिश्रुतिदर्शितानुमानवत्तन्निर्णयोपयोगीनीति कथं त्वया निराकर्तुं शक्यत इत्यर्थः ॥ ४३ ॥

परमते श्रुतिवाक्यानामेकार्थत्वनियमाभावमेव तदङ्गीकृतानेकार्थश्रुत्युदाहरणै-र्दर्शयति—कर्मेति ।

" ज्योतिरुपक्रमात्तु तथा ह्यधीयत " ( ब्र० सू० १।४।९ ) इत्यधिकरणे तावत्—कृत्स्नकर्मकाण्डस्त्वया कर्मब्रह्मोभयपरतया व्याख्यातः । उदाहृतं च तत्र ब्रह्मपरत्वं स्थालीपुलाकन्यायेन केषुचिद्वाक्येषु । तत्र वसन्तवाक्यं यथा—

---

टि०—ज्ञानमप्रतिघं यस्य वैराग्यं च जगत्पतेः " ( ) इत्यादिः । न चैतासां " सर्वः शर्वः शिवः स्थाणुर्ज्येष्ठः श्रेष्ठः प्रजापतिः " इति सहस्रनामान्तर्गतशिव-प्रजापतिशब्दघटितत्वाद् विष्णुपरत्वमिति वाच्यम् । " यानि नामानि गौणानि " इति प्रतिज्ञानुसारेण गौणानामेव सहस्रनामसु प्रवेशेन विष्णोर्गौणार्थत्वे विष्ण्वन्यस्य शिवब्रह्मादेरेव मुख्यार्थत्वात् । ततश्चोक्तान्यनुमानानि श्रुतिस्मृतिसहितानि तत्तात्पर्यग्राहकाणि न त्वया निरसनीयानि" इत्याशयः । एतेन " प्रत्यक्षाद्यमूलानामनुमानानामदृष्टार्थसाधकतया " तात्प-र्यधीहेतुत्वस्याप्यसंभवः । " श्रुतिस्मृतिसहायं यत् " इत्यादिस्मृत्या च प्रमाणान्तरमूल-कयुक्तेरेव तात्पर्यलिङ्गत्वोक्तेः । उक्तं च टीकायां—" सत्यमस्त्येवानुमानस्यौपनिषदपदार्थ-निश्चायकत्वम् । श्रुत्यादिसहकारियुक्तस्य, नतु नियतप्रामाण्यं स्वातन्त्र्येणादृष्टार्थनिश्चा-यकत्वम् । तादृशं च प्रकृतम् " इति परास्तम् । प्रथमानुमानस्य प्रत्यक्षमूलत्वेन द्विती-यतृतीययोश्च श्रुतिस्मृतिमूलकत्वस्य पूर्वमेवोक्ततयौपनिषदशिवप्रजापतिशब्दार्थनिर्णाय-कत्वात् । यत्तु—न चैतानि श्रुत्यादिपरिगृहीतानि, प्रत्युत " एकमेवाद्वितीयम् " ( छा० ६ । २ । १ । ) "एको दाधार " (:..... ) इत्यादिश्रुतिस्मृतिविरुद्धानि । तादृशैस्तर्कैः श्रुति-तात्पर्यं कल्पयतस्तवैवेयं शोभा न परीक्षकाणाम् " इति तदपि न । तासां सामान्यतः प्रवृत्त-त्वेन भवद्विष्णुपरत्वानिर्णयादिति दिक् ॥ ४३ ॥

व्या०—वसतीति वसः। पचाद्यच्। तनोतीति तिः। औणादिको डिप्रत्ययः। पूर्वपदस्य नकारागमः। वसश्चासौ तिश्चेति वसन्तिः। सर्वत्र व्याप्य वर्तमानो जगत्कर्ता चेत्यर्थः। तत्र संबुद्धिर्वसन्ते। द्विरुक्तिरादरार्था। जि—जातं पूर्ववज्जनेर्डिप्रत्यये—जिः। अवतेः क्तिः, ओतीति। जातं जगत्, ओति ओतं—प्रविष्टं यस्मिन् स ज्योतिः। षः प्राणः। चेष्टकत्वात्। "षकारः प्राण आत्मेति श्रुतिः। ज्योतिश्चासौ षश्च ज्योतिषः। तत्र संबुद्धिर्ज्योतिषेति। आयजेतेत्यपि संबुद्धिः। आ समन्तात्। यजैर्यज्वभिरितः प्राप्त इत्यर्थः। "यजेर्घञर्थे कविधानम्" इति कप्रत्ययः। संप्रसारणाभावश्छान्दसः। "इन्द्र आगच्छ" इत्यत्र इन्द्रेति आ इति गच्छेति संबोधनानि। गमेश्छदेश्च डप्रत्यये+गं—गतं, छं छादनं यस्मादसौ गच्छः। निरवद्य इत्यर्थः। तत्संबुद्धिर्गच्छेति। स्वाहाशब्दे—स्वं स्वात्मीयं यज्ञादिषु दत्तं हविराहरति स्वी कुरुत इति स्वाहः। हञो डप्रत्ययः। आ इति विष्णुनाम। तयोः समासे संबुद्धिः स्वाहेति। नमःशब्दे नमतेरधिकरणार्थेऽसुन् प्रत्ययः। नमन्ति नियमेनास्मिन् वर्तन्ते कल्याणगुणा इत्यर्थः। इत्येवं बहुषु स्थलेषूदाहृतानि विस्तरभयान्न लिख्यन्ते।

तथोपनिषत्स्वप्यब्रह्मवाचिशब्दा ब्रह्मस्वार्थोभयपरतया व्याकृताः। तद्यथा— "प्राणो वा आशाया भूयान्" (छा० ७। १५। १) इति प्रकरणे प्राणशब्दो भूमाधिकरणे (ब्र० सू० १। ३। ८) ब्रह्मपरतया व्यतिहाराधिकरणे (ब्र० सू० ३। ३। ३८) मुख्यप्राणपरतया च भाष्ये व्याकृतः। उक्तार्थद्वयपरमिदमिति टीकायामुक्तम्। तथा "इन्द्रियेभ्यः परा ह्यर्थाः" (क० ३। १०) इत्यादीनां तदधीनत्वन्यायेन ब्रह्मणि समन्वय उक्तः। इन्द्रियशब्दप्रवृत्तिनिमित्तस्येन्द्रियत्वस्य ब्रह्माधीनत्वादिन्द्रियशब्दो ब्रह्मपरः। इन्द्रियगतपरत्वावधित्वस्य पञ्चम्यर्थस्य ब्रह्माधीनत्वात्पञ्चम्यपि ब्रह्मपरेत्यादिप्रकारेणेन्द्रियदेवतातदुत्कर्षप्रतिपादकत्वं चेति तेषामङ्गीकृतम्। एवमन्यान्यपि भूयांस्युदाहरणानि। "वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि" (छा० ६। १५। २) इत्यादिवाक्ये वाङ्मनःप्राणशब्दा उत्तरोत्तरस्मिँल्लीयमानोमारुद्रहिरण्यगर्भपरा इति। सृतावुत्तरोत्तरस्मिँल्लीयमानवागिन्द्रियादिपरा इति चानेकार्थता वाङ्मनसि दर्शनात् (ब्र० सू० ४। २। १) इत्यधिकरणे दर्शिता। "केन स्याद्येन स्यात्तेनेदृश एव" (बृ० उ० ३। ५। १) इति बृहदारण्यकवाक्यं ज्ञानिनो विहितनिषिद्धसाधारण्येन नियन्त्रणयथेष्टाचरण-

श्लेषप्राये कवित्वे प्रमितपरतया श्लाघनीये च सूत्रे ।
नानाकर्मोपयोगश्रुतिसमधिगतानेकबोध्ये च मन्त्रे ।
एकार्थत्वव्यवस्थात्यजनमनुमतं सर्वमीमांसकाना-
मन्यत्रापीच्छया तद्यदि भवति तव ब्रह्मवाक्येष्वपि स्यात् ॥४५॥

व्या०-विधिपरमिति विहितमध्य एव केषांचिदाचारः केषांचित्परित्याग इत्येतद-नुज्ञापरमिति, सवर्मपि विहितमेव कर्मविधिनिबन्धनं विना स्वेच्छया कार्यमित्येवं-परमिति चार्थत्रयस्य हिरण्यगर्भतदितरदेवतामनुष्यविषयत्वेनाविरोध इति "स्तुत-येऽनुमितिर्वा ( ब्र० सू० ३।४।१४ ) इत्यधिकरणे निरूपितत् । वह्न्यादि-देवताप्रतिपादकाः सूक्तमन्त्रास्तदुत्तमसकलदेवताविषयत्वेनाभिमतार्था इति " अङ्गावबद्धाधिकरणे ( ब्र० सू० ३ । ३ । ५७ ) प्रतिपादितम् । एवमे-नेकार्थत्वेन सकलमपि श्रुतिवाक्यमाकलयतस्तव सृष्टिवाक्येऽप्यनेकस्रष्टृपरत्वं संभवतीति भावः ॥ ४४ ॥

ननु केषुचिद्वाक्येष्वनेकार्थत्वाङ्गीकारमात्रेण सृष्टिवाक्येष्वपि तदापादने मतान्तरेष्वपि तदापद्यते । श्लिष्टकवित्वेषु सूत्रनिबन्धनेष्वनेकत्र विनियुक्तेषु मन्त्रे-षु चानेकार्थत्वस्य सर्वैरप्यङ्गीकृतत्वादित्यत आह—श्लेषप्राय इति । शब्दानां व्यवस्थितैकार्थपरत्वमौत्सर्गिकम् । वक्तृविवक्षायां विनियोगेन वा क्वचि-त्तदपोद्यत इति सकलमीमांसकमर्यादामुल्लङ्घ्य स्वकल्पितार्थनिर्वाहाय स्वेच्छयैव श्रुतिवाक्येष्वनेकार्थकत्वं कल्पयतस्तदर्थं शब्दानां यावन्तोऽर्था योगरूढ्यादिभिः संभवन्ति तावदर्थपरत्वमौत्सर्गिकं, पौरुषेयवाक्येषु वक्तृविव-क्षावशादेकार्थनियतत्वमित्यभ्युपगच्छतस्तव वसन्तादिवाक्येष्विव सर्वेष्वपि ब्रह्म-वाक्येष्वन्यथापदविभागैर्योगरूढ्यादिभिश्चानेकार्थत्वप्रतीतिः संभवत्येवेत्यनि-वार्यमनेकस्रष्टृपरत्वमित्यर्थः ॥ ४५ ॥

टि०-१ अनेकार्थत्वेनेति । ननु प्रमाणवशेन क्वचिदनेकार्थत्वे सर्वत्र तथात्वापादनं न युक्तम् । मानवशेनानेकार्थत्वस्य " ज्योतिरुपक्रमात् " ( ब्र० सू० १ । ४ । ९ ) इत्यत्र सर्वता-न्त्रिकैरभ्युपगतत्वादिति चेन्न । श्रुतीनामनेकार्थत्वेऽभियुक्तसंमतस्य कस्यापि प्रमाणस्यानुप-लब्धेः । प्रत्युतार्थभेदे वाक्यभेदस्यैव दोषस्य जागरूकत्वात् । ज्योतिराद्यधिकरणे मानाधी-नानेकार्थत्वस्य सर्वतान्त्रिकसंमत्युक्तेर्विस्मरणमूलत्वात् । सृष्ट्यादिवाक्यानामनेकार्थत्वाभा-वस्याद्वैतिमते संभवेऽपि द्वैतिनां शैववैष्णवानामसंभवात् । तेषां मते नियम्यनियामकभाव-स्वातन्त्र्यास्वातन्त्र्यव्यवस्थाभावेन सृष्ट्यादिप्रातिहतेरवश्यंभावात् । हरेरन्येषां कर्तृत्वविरो-धिपारतन्त्र्योक्तेर्ब्राह्मशैवश्रुतिस्मृतिपुराणाद्यनवगाहनमूलत्वेनातीव हेयत्वात् । किंच द्वैतिनां शैववैष्णवादीनां यावच्चन्द्रदिवाकरं कलहस्यापरिहार्यतया तैरपि श्रीमच्छंकरभगवत्पादी-यमद्वैतमतमेव शरणीकर्तव्यमिति रहस्यम् ॥ ४४ ॥ ४५ ॥

सृष्ट्यादिश्रवणैर्विशेषवचनान्नारायणैकान्तिभिः ।
स्पृश्या नेतरदेवता इति वचस्त्वेकार्थवादोचितम् ॥
तस्मात्तत्परता भवेत्तव परं नान्यार्थधीवारणं
स्रष्टॄणां च विमुक्तवत्तव मते नाऽऽशङ्क्यमीर्ष्यादिकम् ॥४६॥

---

व्या०— ननु " सदेव सौम्येदमग्र आसीत् " ( छा० ६ । २ । १ ) " ब्रह्म वा इदमग्र आसीत् " ( बृ० १ । ४ । १० ) " आत्मा वा इदमेक एवाग्र आसीत् " ( ऐ० उ० १ । १ ) इत्यादिसृष्टिवाक्यगतानां सत् ब्रह्म आत्मादिपदानां " एको ह वै नारायण आसीत् " (महा० १) इत्यादिविशेषवचनबलेन विष्णवेकनिष्ठत्वमिति नानेकस्रष्टृत्वपरत्वं प्रसज्यत इत्याशङ्कां निराचष्टे—सृष्ट्यादीति । इयं शङ्का श्रुतीनामेकार्थवादिनः शोभते । सृष्टिवाक्यानां विशेषबलान्नारायणपरत्वावश्यंभावे सत्यर्थान्तराणामवकाशाभावेन निरासात् । तव तु श्रुतीनामनेकार्थपरत्वसंभवं मन्वानस्य सृष्टिवाक्यानां नारायणपराणां सतामन्यपरत्वमपि संभवतीत्यबाधेन तेभ्यस्तद्धीरुदीयमाना दुर्वारा । नन्वन्यत्र श्रुतिवाक्यानामनेकार्थत्वसंभवेऽपि सृष्टिवाक्यानां नानेकस्रष्टृपरत्वं संभवति । स्रष्टृबाहुल्ये कदाचित्तेषां परस्परमीर्ष्यादिना वैमत्येन प्रपञ्चसृष्टिनिवृत्तिप्रसङ्गादिति चेन्न । त्वन्मते मुक्तानामिव स्रष्टॄणामपि निर्दोषतयेर्ष्याद्यनुदयोपपत्तेः । इत्थं हि तव मतं—सायुज्यमुक्तिभाजो देवाः स्वोत्तमं देवतानुप्रवेशक्रमेणैव भगवद्देहमनुप्रविश्य ग्रहावेशन्यायेन भगवद्देहेन्द्रियैस्तद्भुक्तानेव भोगान्कदाचिद्बहिर्निर्गत्याऽऽत्मस्वरूपाभिन्नैश्चिन्मात्रदेहेन्द्रियैः स्वसंकल्पोपनतांश्च भोगान्भुञ्जाना आनन्दवल्ल्यामुक्तक्रमेण स्वरूपानन्दे ज्ञानैश्वर्यभोगेषु चोत्तरोत्तरं शतगुणोत्कृष्टाः पूर्वदेवमुक्तावपि यथास्वं ब्रह्मेन्द्रवरुणचन्द्रसूर्यादितत्तदाधिकारिकदेवतापदं तदनुसारिणमुत्तमाधमभावं पूज्यपूजकत्वादिव्यवस्थां चानुभवन्तो विहरन्ति । न चैवं मुक्तानां तारतम्यवत्त्वे देवव्यतिरिक्तास्तु सालोक्यादिमुक्तिभाजो यथाधिकारं भूरादिषु सप्तसु भगवल्लोकेषु च स्थितानि भगवतः स्थानानि प्राप्य स्वेच्छागृहीतबाह्यदेहैश्चिन्मात्रदेहैर्वा स्वसंकल्पोपनतान् भोगान्भुञ्जानाः पूर्ववद्वर्णाश्रमादिभेदं तदनुसारिणीं पूज्यपूजकत्वादिव्यवस्थां ज्ञानानन्दैश्वर्यभोगतारतम्यं

---

टि०— १ वादिन इति । अद्वैतिन इति शेषः । तन्मते तत्पदार्थप्रसिद्ध्यर्थं श्रुत्यादिषु जगत्कारणत्वं ब्रह्मणोऽध्यारोपापवादाय निरूपितम् । तद्विशिष्टस्य तत्पदवाच्यस्य लक्ष्यस्य चाभेदेन श्रुतीनामेकस्रष्टृपरत्वं संभवतीति भावः ॥ ४६ ॥

स्रष्टुं प्रत्येकमीशाः सकलमपि परब्रह्मभूतास्त्रयश्चे-
त्संभूयैते सृजेयुः किमिति भजति ते नात्र शङ्कावकाशम् ।
स्रष्टुं शक्तो विनैव स्वयमुपकरणैरच्युतस्तद्व्यपेक्षा
सृष्टौ लीलाऽस्य दण्डग्रहणमिव गतौ जाङ्घिकस्येतिगन्तुः ॥४७॥

---

व्या०—च प्राप्ता विहरन्ति । न चैवं मुक्तानां तारतम्यवत्त्वे तद्दर्शनकृतदुःखद्वेषेर्ष्यादिभिर्मुक्तेरपुरुषार्थत्वप्रसङ्गः । निर्दोषाणां तेषां गुरुशिष्यवत्तदप्रसक्तेः ' इति । यदेवं स्वाधिकज्ञानानन्दभोगैश्वर्यवतः पश्यतां स्वयं तत्सेवकत्वादिना ततो निकर्षमनुभवतामपि दुःखेर्ष्याद्यभावस्तदा किमु वक्तव्यं नित्यनिर्धूतनिखिलदोषसकलकल्याणगुणाकरपरब्रह्मरूपाणामवाप्तसकलकामानां स्वाधिकानन्दादिकं क्वचिदप्यपश्यतां कुतोऽपि निकर्षमननुभवतामीश्वराणामीर्ष्यादिना वैमत्यं न संभवतीति । यदि चेर्ष्यादीनामन्तःकरणधर्मत्वान्मुक्तानामन्तःकरणाभावात्तदभावः समर्थ्यते, तदेश्वराणामपि तथाभूतान्तःकरणवत्त्वमनङ्गीकृत्यैव तदभावः समर्थ्यतामिति भावः ॥ ४६ ॥

ननु यदि सृष्टिवाक्यप्रतिपाद्यपरब्रह्मरूपजगत्कर्तारो बहवस्तदा तेषां "पराऽस्य शक्तिर्विविधैव श्रूयते " ( श्वे० ६ । ८ ) इत्यादिश्रुतिबलात्प्रत्येकमचिन्त्यापरिमितशक्तिमत्त्वमङ्गीकरणीयमित्यन्योन्यानपेक्षया निखिलजगत्स्रष्टुं शक्तानां तेषां संभूयस्रष्टृत्वकल्पनमयुक्तम् । लोके प्राकारगोपुरादिषु शिल्पिनां संभूयकारित्वस्य प्रत्येकाशक्तिनिबन्धकत्वात् । अतः सृष्टिवाक्यानामेकस्मिन्नेव स्रष्टृत्वपर्यवसानावश्यंभावे विशेषवचनबलान्नारायणे पर्यवसानं स्यादित्याशङ्क्याऽऽह—स्रष्टुमिति ।

इयमाशङ्कैव तव भवितुं नार्हत्येव । त्वयेश्वरस्य जगत्सृष्टौ नियमेन प्रकृत्यादिकमुपादानत्वेनैव कालादिकं निमित्तत्वेनैवापेक्ष्यैव प्रकृत्यैव महान्तं महतैवाहं-

---

टि०— १ परब्रह्मभूता इति । निर्विशेषचैतन्यमेकमेवोद्भूतसत्त्वगुणमायावच्छिन्नं पालयितृ विष्णुरिति व्यपदिश्यते । तदेवाऽऽविर्भूतरजोगुणमायाक्रान्तं स्रष्टृ ब्रह्मेति गीयते । अतिरोहिततमोगुणमायावच्छिन्नं संहर्तृ चैतन्यं शिवशब्दवाच्यतां भजति । " अथ यो ह खलु वावास्य राजसोंऽशोऽसौ स योऽयं ब्रह्मा । अथ यो ह खलु वावास्य सात्त्विकोंऽशोऽसौ स योऽयं विष्णुः । अथ यो ह खलु वावास्य तामसोंऽशोऽसौ स योऽयं रुद्रः" ( मै० उ० ५.२ ) इति मैत्रेयोपनिषदि तथाऽवगतेः । तथा च ब्रह्मादीनां मायावच्छिन्नत्वलक्षणपरमेश्वरत्वेनैक्येऽपि तत्तद्गुणविशिष्टमायाया भिन्नत्वेन तदुपाधिभेदेन तेषां परस्परं भेदो युज्यत इत्यन्तरार्थः ॥ ४७ ॥

कर्त्रैकत्वं वदन्ती कलयतु फणितिर्वारणेनार्थवत्ता
एकैकस्यैव कर्तुर्बहुभवनमुखानीतभेदप्रसक्तेः।
येन त्वं नेह नानाप्रभृतिमुपनिषद्भारतीं विप्रलब्धुं
निर्द्वैतब्रह्मचौर्यव्यसनमनुभवन्नीहसे साहसेन ॥ ४८ ॥

व्या०—कारमित्यादिक्रमनियमं चापेक्ष्य सृजतः किं नाम स्वातन्त्र्यं, तदपेक्षणस्य शक्त्यभावनिबन्धत्वात्स्वातन्त्र्ये च सति प्रकृत्यादिकमनपेक्ष्य तन्निमित्तोपादानकार्यक्रमादिकं वा व्यत्यस्य सृष्टिप्रसङ्गादित्याशङ्क्य साधनान्तरतद्व्यवस्थातत्क्रमनियमापेक्षणेऽपि निरङ्कुशमेव तस्य स्वातन्त्र्यं, तदपेक्षणस्य शक्त्यभावनिबन्धनत्वाभावात्। स्वयमेव गन्तुं शक्तस्यापि गमनसमये लीलया दण्डावष्टम्भवत्स्वेच्छामात्रनिबन्धनत्वादित्यारम्भणाधिकरणादिषु परिहततया तन्न्यायेन प्रत्येकमखिलजगत्सृष्टिशक्ता अपि परमेश्वराः केवलं लीलया संभूय जगत्सृजन्तीति वक्तुं शक्यत्वादिति भावः ॥ ४७ ॥

ननु "द्यावाभूमी जनयन्देव एकः" (श्वे० ३.३) इत्यादिकर्त्रैक्यश्रुतिविरुद्धं सृष्टिवाक्यानामनेककर्तृपरत्वकल्पनमित्याशङ्क्याऽऽह—कर्त्रैकत्वमिति। कर्त्रैक्यश्रुतिर्ब्रह्मविष्णुरुद्राणां मध्य एकैकस्यैव कर्तुः "तदैक्षत। बहु स्यां प्रजायेयेति" (छा० ६।२।३) इत्यादिषु श्रुतबहुभवनमुखैरुपस्थापिताया भेदप्रसक्तेर्निवारणेनार्थवती स्यात्। एवमेव हि त्वया निष्प्रपञ्चब्रह्मापलापव्यसनिना "नेह नानाऽस्ति किंचन" (क० ४.११) "एकधैवानुद्रष्टव्यम्" (......) इत्यादिश्रुतीनां विष्णोरन्नमयादिरूपाणि शिरःपक्षपुच्छाद्यवयवा ज्ञानानन्दादयो गुणाः सृष्टिसंहाररक्षणादिक्रियाः सर्वगतत्वादयो भावरूपधर्मा अदृश्यत्वादयश्चाभावरूपधर्मा विष्णोः सकाशात्परस्परस्माच्च भिद्यन्त इति शङ्कावारणेनार्थवत्ता दर्शितेति भावः ॥ ४८ ॥

टि०— कर्त्रैक्यश्रुतिरिति। सा हि सांख्यमते कारणीभूताया मृदो घटशरावामत्रादिबहुरूपभवनेन नानात्वाभ्युपगमवत्। शैववैष्णवादिमतेऽपि कारणस्य तथात्वापत्त्या तद्वारणेन गतार्था कर्तृनानात्वाविरोधिनीति भावः। एतेन "एकमेवाद्वितीयं, जनिता, एक एव" इत्यादिसावधारणश्रुत्युक्तकारणैकत्वस्य स्वाश्रयप्रतियोगिकभेदासामानाधिकरण्यरूपतया तद्विरोधेनानेककर्तृसिद्धेरेवायोगेनैकैकस्यानेकभवनशङ्कानुदयः। "नेह नानाऽस्ति" इत्यादौ न्यायामृताद्युक्तरीत्या गुणकर्मादिभेदस्य प्राकरणिकप्रसक्तिवत् "एको दाधार" इत्यादावेकैकस्य बहुभवनप्रसक्तेरभावाच्च। कर्तुर्बहुभवनस्य "यदेकमव्यक्तमनन्तरूपम्" इति श्रुत्युक्तत्वेन तन्निरासायोगाच्च। "न ब्रह्मा न च शंकरः" अन्येऽल्पस्य वा न वा" इति

योऽ यस्योपास्तियोग्यः स्फुरति नियमतस्तस्य कर्ता स एवे-
त्यर्थं तं तावदैक्यश्रुतिरनुवदतु श्रोतृधीभेदभिन्नम् ।
क्लृप्तो यस्याल्पभूयो निखिलगुणपरोपास्तियोग्यत्वभाजा-
मात्मेत्येवेत्युपासाविधिरवधृतिमानित्थमर्थं ब्रुवाणः ॥४९॥

व्या०—प्रकारान्तरेणापि कर्त्रैक्यश्रुतिनिर्वाहः संभवतीत्याह-य इति । ईश्वराणां मध्ये यदुपासने यस्य पुरुषस्यानादियोग्यता स एव जगत्स्रष्टा नान्य इति तस्य स्फुरतीति तत्तदधिकारिबुद्धिविषयं तमेवार्थं तस्य तस्याधिकारिणः श्रवणकर्तुर्बुद्धिभेदेन भिन्नभिन्नं कर्त्रैक्यश्रुतिरनुवदतीत्येवं वा निर्वाहोऽस्तु । न च श्रुतीनामनेकार्थत्वसंप्रतिपत्तावपि श्रोतृभेदेन भिन्नभिन्नार्थबोधकत्वं न संप्रतिपन्नमिति वाच्यम् । "आत्मेत्येवोपासीत"(बृ० १।४।२) इत्येव विधौ तव तत्संप्रतिपत्तेः । इत्थं हि तव मतं—ब्रह्मोपासनायामधिकारिणस्तावदुपास्यगुणभेदेन त्रिविधाः-सत्यज्ञानादिभिरल्पैर्गुणैर्मर्त्याः । संभूतिव्युव्याप्त्यादिभिर्भूयोभिर्गुणैरिन्द्रादिदेवताः । अखिलैर्गुणैश्चतुर्मुखादयः । देवेषु मर्त्येषु च स्वस्वभाविमुक्त्यर्थोपासनीयगुणविशेषोपसंहारानुपसंहाराभ्यां गुणभूयस्त्वाल्पत्वावान्तरभेदैः सन्ति बहवोऽधिकारिणः । सर्वान्प्रति तत्तद्योग्यगुणविशिष्टब्रह्मोपासनाभेदानां विधायकम् "आत्मेत्येवोपासीत" इति वाक्यम् । तत्तद्देवेषु मर्त्येषु च यस्य यावद्गुणोपासने योग्यता तं प्रति तावद्गुणविशिष्टं ब्रह्माऽऽत्मशब्दोऽभिधत्ते । एवकारस्तदयोग्यगुणव्यवच्छेदकः[1] । चतुर्मुखादीन्प्रति सकलगुणविशिष्टं ब्रह्माभिधत्ते । एवकारस्तदयोग्यव्यवच्छेदक इति ।

स्यादेतत्—युक्तमुपासनाविधिवाक्यस्य पुरुषभेदेन विरुद्धानेकार्थप्रतिपादकत्वं, न तु वस्तुपरवाक्यस्य । उपासनावाक्यस्य तत्तत्पुरुषं प्रति तत्तद्योग्यगुणविशि-

टि०—विशिष्य कर्त्रन्तरनिषेधाच्चेति" परास्तम् । "पशुना यजेतेत्यादौ" एकत्वस्य स्वसजातीयद्वितीयराहित्यस्य मीमांसकनैयायिकाद्यङ्गीकृतत्वेन भवदेकत्वनिर्वचनस्यासंप्रतिपन्नत्वात् । प्रत्युताऽऽत्माश्रयदोषग्रासाच्च । उपादानस्यैकस्य बहुभवनस्य "बहु स्यां प्रजायेय" इति श्रुतिसिद्धत्वेन नानात्वप्रसक्तेरुक्तत्वात् । कर्त्रनेकत्वाभ्युपगमे तव मूलोच्छेदाच्च । "न ब्रह्मा न च शंकरः" इत्यादेः परमात्मविभूतिरूपब्रह्मशंकरपरत्वात् । अभिन्ननिमित्तोपादानस्य वैदिकस्याभ्युपगमे दोषगन्धाभावेनैकत्वश्रुतिसामञ्जस्येन चागत्या त्वया तस्यैव शरणीकरणीयत्वादिति दिक् ॥ ४८ ॥

१ उपासीतेति—नन्वात्मनि तत्तद्योग्यगुणानामिव स्रष्टृनानात्वस्यानभ्युपगमेन तत्संप्रतिपन्नत्वोक्तिरयुक्ता । तत्तदीयानादिमिथ्याज्ञानवासनया तवैवान्येषामपि शिवादिषु स्रष्टृत्वप्रतीतावपि तस्या अनेकमानविरोधेन भ्रान्तित्वमवश्यं कल्पनीयमिति चेन्न । त्वयैवाऽऽत्मनि "यदेकमव्यक्तमनन्तरूपम्" इत्यादिश्रुत्युदाहरणेन कर्तृनानात्वस्य समर्थितत्वादिदानीं

पूर्णत्वं ते निमित्तं निरवधिगणनं भूमशब्दस्य वृत्तौ
वैकुण्ठे तद्गुणानां तदपि किल ततस्तारतम्येन वेद्यम् ।
इत्थं वस्तुस्वभावं क्वचिदविगणयन्बोध्यधीवृत्तिभेदा-
द्भेदः स्यादास्तिवादी यदि तव भवति व्यासकः काऽत्र चिन्ता॥५०॥

---

व्या०—ष्टमेव ब्रह्मोपासनीयं नायोग्यगुणविशिष्टमिति बोधकत्वे हि न प्रामाण्यं हीयते। हीयते तु "सदेव सौम्येदम्" (छा० ६।२।१) इति वस्तुपरवाक्यस्य तत्तत्पुरुषं प्रति शिव एव जगत्कर्ता नान्य इत्यादिबोधकत्वे पुरुषभेदेनानुष्ठानवद्वस्तुस्वरूपस्य भेदासंभवादिति—चेन्नैवम्। त्वया पुराणेषु रामकृष्णाद्यवताररूपाणां भेदश्रवणं लौकिकैर्भ्रान्त्या गृहीतस्य भेदस्यानुवादकमिति "सर्वथाऽपि त एवोभयलिङ्गात्" (ब्र० सू० ३।४।३१) इत्यधिकरणेऽनुव्याख्यानन्यायसुधयोरुक्तत्वेन तथैव कर्त्रैक्यश्रुतेरप्यनुवादकत्वोपपत्तेः। न च वाच्यमवतारेषु तत्कालवार्तिनां लौकिकानां केषांचिद्भेददृष्टिः संभवति। अन्येषां च बहुत्वादिलिङ्गकानुमानाभासेनेति युक्तस्तस्यानुवादो न तु जगत्कर्त्रैक्यस्य तस्य श्रुतिं विना लोकतः प्रत्येतुमशक्यत्वादिति" त्वया पुरुषाणां योग्यतावन्माहात्म्यज्ञानपूर्वकस्नेहरूपा भक्तिरप्यनादिरिति "स्थानविशेषात्प्रकाशादिवत्" (ब्र० सू० ३।२।३५) "अनुबन्धादिभ्यः" (ब्र० सू० ३।३।५१) इत्यधिकरणयोरुक्तत्वेन शिवादिभक्तान्तर्गतस्य शिव एव जगत्कर्ता नान्य इत्यादिरूपेण तत्तन्माहात्म्यज्ञानस्याप्यनादित्वसंभवात्। त्वया सर्वेषां मतानामनादित्वस्योक्ततया तत्तन्मताभिमतमाहात्म्यज्ञानपरम्परानादित्वसंभवाच्चेति भावः॥ ४९॥

परसंप्रतिपन्नश्रुत्युदाहरणेनापि कर्त्रैक्यश्रुतेरसदर्थबोधकत्वं संभवतीत्याह—पूर्णत्वमिति। "यो वै भूमा तत्सुखम्" (छा० ७।२३।१) इति श्रुतौ भूम-

---

टि०—तत्प्रतिक्षेपे मदिरान्धतापत्तेः। शिवादिषु कर्तृत्वे शैवादिभिर्मानान्तराविरोधस्य स्पष्टं तत्र तत्र व्यवस्थापिततया तत्र कारणत्वप्रतीतिर्भ्रान्तित्वकल्पनायोगाच्च। न च वस्तुन एकरूपतया तस्य नानात्वबोधने श्रुतेर्भ्रामकत्वेनाप्रामाण्यापात इति वाच्यम्। श्रुतेरेकार्थपर. त्वानियमस्य त्वयैव निरासात्। तत्प्रकारस्तु मूल एव स्पष्टः। तस्माच्छ्रुतेरैकार्थ्यनिर्वाहायाद्वैतमतमेव प्रविश्य स्थेयमिति यत्किंचिदेतत्॥ ४९॥

१ भूमशब्द इति—अत्र दीक्षितपश्चास्यदर्शनेन कश्चिद्द्रौति—"सम्यक्तव मूर्धानमध्यारोहदुन्मादः। यदविद्यमानान्यप्रामाण्यकराणि पूर्वोत्तरानुसंधानहीनान्येव बहुलमभाषथाः। सातिशयं निरतिशयत्वेन भूमादिशब्दो वक्तीत्यस्यैवासत्त्वादिति"—तत्तु तस्य स्वग्रन्थपौर्वापर्याद्यविदुषः स्वमुखदोषमजानतः पुरुषस्य दर्पणचूर्णीकरणकृत्यमनुकरोति।

व्या०—शब्दस्तवापि ब्रह्मपरः। तत्रायं तव मते विशेषः—"बहोर्लोपो भू च बहोः" ( पा० सू० ६ । ४ । १५८ ) इति भावे निष्पन्नोऽपि भूमशब्दः "यो वै भूमा तदमृतम्" ( छा० ७ । २४ । १ ) इत्यादिषु धर्मिण्येव प्रयोगाद्धर्मिणि रूढः । तस्य च परब्रह्मणि धर्मिणि वैकुण्ठे प्रवृत्तौ निमित्तमवधिविशेषगणनानिरपेक्षं पूर्णत्वं, न त्वस्मादेवायं पूर्ण इति प्रतियोगिविशेषापेक्षम् । प्रकरणोपपदादितत्संकोचकाभावात्। नामवागाद्युत्तरोत्तरोत्कृष्टनिरूपणचरमकक्ष्यापन्नत्वात् । "नाल्पेषु सुखमस्ति" ( छा० ७ । २३ । १ ) इति निरुपपदेनाल्पपदेन सर्वस्याल्पस्य प्रतियोगित्वेन निर्देशाच्च । तत्तु निरवधिकं पूर्णत्वं न धर्मिण एव परममहत्त्वरूपं, किंतु तद्गुणानामानन्दादीनां निरतिशयत्वरूपम् । "वाग्वाव नाम्नो भूयसी" ( छा० ७ । २ । १ ) इत्यादौ वैपुल्यरहितेषु वाक्संकल्पध्यानादिष्वपि तत्तत्प्रकरणे भूमशब्दसमानार्थभूयःशब्ददर्शनेनात्रापि तदैकरूप्याय गुणतो वैपुल्यस्यैव तदर्थतौचित्यात् । तच्च पूर्णत्वं सर्वेषामधिकारिणामनेकप्रकारेण श्रवणमननध्यानसाक्षात्कारेषु प्रतीयते, किंतु तत्तद्योग्यतानुसारेण । न च पूर्णत्वे तारतम्यासंभवः । आनन्त्य इव तदुपपत्तेः । अस्ति हि पूर्वोत्तरकल्पापेक्षतयाऽतीतक्षणेषु सतोरानन्त्ययोस्तारतम्यमिति" । तदेतत्सर्वं "भूमा संप्रसादादध्युपदेशात्" ( ब्र० सू० १ । ३ । ८ । "भूम्नः क्रतुवज्ज्यायस्त्वम्" ( ब्र० सू० ३ । ३ । ५९ ) "ब्रह्मदृष्टिरुत्कर्षात्" ( ब्र० सू० ४ । १ । ५ ) "नानाशब्दादिभेदात्" ( ब्र० सू० ३ । ३ । ६० ) इति त्वदीयाधिकरणेषु स्पष्टम् । तत्रेदमुच्यते—इयत्तापरिच्छेदराहित्यमात्ररूपे संभवति तारतम्ये समासेन तु निरतिशयत्वसर्वोत्तमत्वसर्वोत्कृष्टत्वापरपर्यायतया तेष्वधिकरणेषु त्वयोद्घोषिते भूमब्रह्मशब्दयोः प्रवृत्तिनिमित्ततया त्वदभिमते ब्रह्मानन्दादीनां पूर्णत्वे निरतिशयत्वादिस्वरूपव्याघातात् । न हि ये तारतम्यशालिनस्ते निरतिशयाः सर्वोत्तमा इति च युज्यते । तेषु यस्य यदपेक्षया निष्कर्षस्तस्य तेन सातिशयत्वस्योत्तमत्वस्य चावर्जनीयत्वात् ।

यद्युच्येत—परमेश्वरस्याचिन्त्यशक्तिमहिम्ना तदानन्दादिविशेषाणां परस्परतारतम्यवतामपि निरतिशयत्वादि संभवतीति । तदा परमेश्वराणामचिन्त्यशक्तिमहिम्ना परस्परभिन्नानामप्येकत्वं संभवतीति किमिति वक्तुं न शक्यम् । तस्मात्परब्रह्मानन्दैकदेशान् सातिशयत्वेनाभूम्न एव भूमरूपतया तत्तदधिकारिणं प्रति भूमशब्दः प्रतिपादयतीति त्वया वक्तव्यम् । ननु सातिशयानामपि ब्रह्मानन्दैकदेशानां वागादीनां भूयस्त्ववद्भूमरूपत्वमुपपद्यत एव । भूमशब्दस्य तन्निरति-

किंच स्थाणुविरिञ्चयोरपि जगत्कर्तृत्वमावेदय-
न्नास्त्येव श्रुतिमस्तकेषु बहुधा वैशिषिको गीर्गणः।
ऐकार्थ्यं सहते स सृष्टिवचसां नैव त्वदीये मते
तत्तन्नामपदप्रसिद्ध्यतिगतौ हेतुश्च नास्त्येव ते ॥ ५१ ॥

व्या०—शयवाचकता त्वशेषब्रह्मानन्ददर्शनयोग्याधिकारिविशेषमपेक्ष्य कल्पत इति चेन्न। त्वन्मते तथाभूताधिकारिण एवासिद्धेः। हिरण्यगर्भपर्यन्ताः सर्वेऽप्यधिकारिणो मुक्त्यनन्तरमपि ब्रह्मानन्दैकदेशस्यैव द्रष्टारः। नित्यमुक्ता श्रीरपि तथैवेति त्वदभिमतमोक्षनिरूपणप्रस्तावेऽनुव्याख्यानन्यायसुधयोरुक्तत्वात्। त्वदीयान्प्रति ब्रह्मानन्दैकदेशबोधकभूमशब्दस्य तन्निरतिशयत्वबोधकत्वाभावे त्वदीयग्रन्थेषु निरतिशयत्वापरपर्यायं भूमत्वमित्यादिव्यवहारायोगाच्च। तस्माद्यस्याधिकारिणो यावद्दर्शनयोग्यता, तं प्रति तावन्तमेव सातिशयं ब्रह्मानन्दैकदेशं निरतिशयतया भूमशब्दः प्रतिपादयतीत्यकामेनापि त्वया स्वीकरणीयम्। तथा च यदि वेदः क्वचिदस्तित्ववादिनं प्रति स्यादस्ति स्यान्नास्तीत्यादिविरुद्धप्रकारान्वदन् क्षपणक इव वञ्चकः स्यात्तदा तद्वदेव सृष्टिवाक्यानामपि शैववैष्णवान्प्रति विरुद्धनानाप्रकारबोधकत्वं संभवतीति तत्र तव विशेषेण का विचिकित्सेति भावः ॥ ५० ॥

एवं नारायणस्यैव स्रष्टृत्वे विशेषवचनानि सन्ति नान्येषामित्यङ्गीकृत्य तथाऽपि परमते विरोधाभावात्सदेवेत्यादिवाक्यान्यनुमानानि तत्तात्पर्याणि शिवविरिञ्चयोरपि स्रष्टृत्वपराणि स्युरित्यापादितम्। तदुपपादनार्थं च परमते सृष्टिवाक्यानामनेकस्रष्टृपरत्वे शब्दतोऽर्थतश्च विरोधाभाव उपपादितः। इदानीं शिवविरिञ्चयोरपि स्रष्टृत्वे विशेषवचनानि सन्तीति सुतरां तानि तत्प्रतिपादकानि स्युरित्याह—किंचेति।

"यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासञ्छिव एव केवलः। तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी" (श्वे० ४। १८) "प्रजापतिर्वा इदमेक आसीत्" (तै० सं० २। १। ४) "नाहरासीन्न रात्रिरासीत्। सोऽन्धे तमसि प्रासर्पत् (.........) इत्यादीनि शिवविरिञ्चयोरपि जगन्मूलकर्तृत्वमावेदयन्ति सन्त्येव विशेषवचनानि। न च तेषु स्थितानि शिवप्रजापत्यादिपदानि प्रसिद्धस्वस्वार्थादपनीय नारायण एव स्थापयितुं तत्तन्नामपदानामन्यत्र योगसंभवादिविचारस्तव युज्यते। त्वन्मते सृष्टिवाक्यानामने-

टि०—"भूमा संप्रसादात्" (ब्र० सू० १। ३। ८) "स्थानविशेषात्" (ब्र० सू० ३। २। ३५) "अनुबन्धादिभ्यः" (ब्र० सू० ३। ३। ५१) इत्याद्यधिकरणेषु तद्भाष्यानुव्याख्यानादिषु स्पष्टं तस्यार्थस्य निरूपितत्वादित्यलमसंभाष्यसंभाषणेन ॥ ५० ॥

व्या०—कपरत्वस्याविरुद्धतया प्रसिद्ध्यतिक्रमायोगात् । विरुद्धे खलु तेषामनेकस्रष्टृपरत्वे तत्तत्सृष्टिवाक्यस्थस्रष्टृप्रतिपादकानां पदानामेकस्रष्टृपरत्वावश्यंभावेन सावकाशनिरवकाशविचारः प्रवर्तनीयः स्यात् । तस्मात्त्वन्मते सृष्टिवाक्यानामनुमानविशेषवचनानुसारेणानेकस्रष्टृपरत्वमवश्यं भवेदेवेति न पूर्वपक्षोपन्यस्तानुमानदूषणं युक्तमिति भावः ॥ ५१ ॥

टि०— १ प्रसिद्ध्यतिक्रमायोगादिति—शब्दसामान्यस्यानेकार्थत्वं वदतस्तव मते वेदवाक्यस्यानेकार्थत्ववर्णनं न विरोधावहमिति भावः । अत्र कश्चिन्मुह्यति—"शास्त्रयोनित्वात्" इति सूत्रस्य शास्त्रं योनिर्ज्ञप्तिकारणं प्रमाणं शास्त्रयोनि । तत्त्वादित्येवार्थः । न तु भगवत्पादभाष्योक्तं शास्त्रस्य योनिरिति । जन्माद्यधिकरण एव सकलप्रपञ्चस्रष्टृत्वस्य ब्रह्मणि सिद्धत्वेनास्मिन्नधिकरणे पुनस्तदुक्तिवैयर्थ्यात् । न च जगत्कारणत्वोक्त्याऽर्थलब्धं सार्वज्ञ्यमेव शास्त्रयोनित्वोक्त्या स्फोरयतीति वाच्यम् । तत्रार्थलब्धसर्वशक्त्याद्यस्फुटीकृत्य सार्वज्ञ्यमात्रस्फुटीकरणे विशेषकारणाभावात् । अनन्तजगन्निर्माणोक्त्याऽस्फुटीभूतं सार्वज्ञ्यं तदेकदेशनिर्माणोक्त्या कथमाविर्भवेत् " इति । स तु वक्ष्यमाणरीत्या चिकित्सयितव्यः । सार्वज्ञ्यस्फुटीकरणास्फुटीकरणोक्तेरनुक्तोपालम्भात् । अस्मद्भाष्ये " तदेव सार्वज्ञ्यं द्रढयन्नाह ' इत्येवोक्तत्वात् । दार्ढ्यं च पूर्वसूत्रसिद्धसार्वज्ञ्यस्य "वाचा विरूपनित्यया" [ तै० सं० २।६।११।१ ] इति श्रुत्या वेदनित्यत्वप्रतिपादनेन तत्कर्तृत्वाभावे ब्रह्मणोऽसंभवादित्याक्षेपनिरास एव । स च वेदकर्तृत्वसाधनेनैवेति तदर्थमुत्तरसूत्रप्रवृत्तिः । "शास्त्रं योनिः" इत्यस्यार्थस्य भाष्ये द्वितीयार्थत्वेन संभवदुक्तिकतयाऽङ्गीकृतत्वात् । द्वितीयार्थस्यैव विवक्षायां " शास्त्रादित्येव " सूत्रयितव्यत्वात् । पञ्चम्या ज्ञानज्ञाप्यत्वार्थत्वेन द्वितीयार्थलाभसंभवात् । तथा लघुन्यासं परित्यज्य " शास्त्रयोनित्वात् " इति सूत्रयितुर्बादरायणस्य प्राथमिकार्थ एवाभिप्रेत इति प्रतीतेः । सार्वज्ञ्यवत्सर्वशक्तित्वस्य सूत्रसूचितस्य भाष्यकृद्भिः " निःश्वासित " श्रुत्युदाहरणेन दर्शितत्वात् । " अस्य महतो भूतस्य निःश्वासितमेतद्यदृग्वेदो यजुर्वेदः ( बृ० २।४।१० ] इत्युपक्रम्य " अयं च लोकः परश्च लोकः सर्वाणि भूतानि निःश्वासितानि " इति नामरूपात्मकस्य सर्वस्यापि प्रपञ्चस्य निःश्वसितवदप्रयत्नसाध्यब्रह्मकार्यत्वोक्तेः । एतेन—किंचेदं शास्त्रस्येश्वरनिर्मितत्वमर्थमुपलभ्य रचितत्वं वा निःसृतत्वमात्रं वा । नाद्यः । कणादचरणानुसरणप्रसङ्गात् । श्रुत्यादिविरोधाच्च । न द्वितीयः शास्त्रयोनित्वस्य सार्वज्ञ्यसाधकत्वाभावप्रसङ्गादिति—निरस्तम् । अर्थज्ञानसमकाल एव शब्दोच्चारणस्यैव वेदकर्तृत्वेन विवक्षितत्वात् । अन्यथा भवतोऽपि कणादचरणपङ्कजलेऽद्रत्वप्रसङ्गात् । तस्मात्सूत्रस्योक्त एवार्थ इति संक्षेपः ॥ ५१ ॥

इति शास्त्रयोनित्वाधिकरणदूषणम् ॥

इत्यप्पदीक्षितकृतौ कृतिनां मतेऽस्मि-
न्नानन्दतीर्थकृतशास्त्रमुखापमर्दे ।
एतत्तृतीयमधिकृत्य नयं प्रवृत्तं
दोषप्रदर्शनमुपस्करणीयमार्यैः ॥ ५२ ॥

इति शास्त्रयोनित्वाधिकरणदूषणप्रकरणम् ॥

रोद्धा नोपक्रमादिः श्रुतिषु नयगणस्त्वन्मतेऽर्थान्तराणां
रोद्धा चेत्कर्मकाण्डे कथमपि न भवेद्ब्रह्मनिष्ठा पदानाम् ।
किंचात्रोपक्रमादावपि तव विसरेद्भूमशब्दस्य रीति-
स्तस्मात्सर्वस्तमेव श्रयति नयगणं स्वस्वसिद्धान्तसिद्ध्यै ॥५३॥

---

व्या०— अथ समन्वयाधिकरणदूषणप्रकरणम् ।

स्यादेतत्—यदुक्तं विशेषवचनानुसारेण शिवविरिञ्चयोरपि सृष्टिवाक्यानि पर्यवस्यन्तीति। तन्न युक्तम्। समन्वयसूत्रेण तदाशङ्कानिराकरणात्। तत्र हि वेदेऽपि क्वचिदपि पशुपतिहिरण्यगर्भादीनां सम्यग्जगत्कर्तृत्वं प्रतीयत इति पूर्वाधिकरणाक्षेपे सम्यग्विचारितादुपक्रमादितात्पर्यलिङ्गरूपादन्वयाद्विष्णुरेव जगत्कर्तृतया वेदे प्रतिपाद्यत इत्यतोऽन्यथाप्रतीतिरज्ञानमूलेति स्थापितमित्याशङ्कां निराचष्टे—रोद्धेति।

यद्यप्युपक्रमाद्यो विष्णौ व्यवस्थिताः स्युस्तथाऽपि ते श्रुतीनां विष्णुपरत्वावगमनमेव कुर्युः, न तु शिवविरिञ्चिपरतानिवारणमपि। अनेकार्थसहिष्णोस्तव मते विरोधाभावेन शिवविरिञ्चिपरत्वस्यापि संभवात् । न हि प्रबलं प्रबलमित्येव दुर्बलस्य बाधकम्, अपि तु सति विरोधे। यद्युपक्रमादयो विरोधाभावेऽपि स्वानीततात्पर्यादर्थान्तरं स्वभावादेव वारयेयुस्तदा त्वन्मते कर्मकाण्डस्थपदानां ब्रह्मपरता न स्यात् । अभ्युपगतं च त्वया-"श्येनेनाभिचरन्यजेत" इत्यादिवाक्येषु श्येनादिपदानां "यथा वै श्येनो निपत्याऽऽदत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्याऽऽदत्ते" इत्याद्युपसंहारप्राबल्यन्यायैः कर्मनामधेयत्वं प्रापितानामपि वसन्तादिवाक्येषु प्रदर्शितया रीत्या ब्रह्मपरत्वमपि। ननु श्रुतीनां शिवविरिञ्चपरत्वे च तदेकवाक्यतापन्नोपक्रमादीनां विष्णौ व्यवस्थितानामन्वयो न स्यादिति चेन्मा भूत्। विष्णुपरत्व एव तेषामन्वयोऽस्तु। नहि त्वन्मते क्वचिदर्थे

---

टि०— १ शिवविरिञ्चयोरपीति—तथा ह्यथर्वशिखायां—"कारणं तु ध्येयः सर्वैश्वर्यसंपन्नः सर्वेश्वरश्च शंभुराकाशमध्ये" [ ] "हिरण्यगर्भः समवर्तताग्रे । भूतस्य जातः पतिरेक आसीत्" [ नृ० पू० ता० २ । ४ ] इत्यादीनि सृष्टिवाक्यानीति ।

व्या०—यावतामेकवाक्यतेति नियमोऽस्ति । श्येनादिपदानां ब्रह्मपरत्वे प्रसिद्धश्येनसादृश्यप्रतिपादकवाक्यशेषे तदभावात् । न च वाक्यशेषस्यापि ब्रह्मपरत्वेन तदेकवाक्यता संभवतीति वाच्यम् । कर्मकाण्डस्थपदानां पदविधयैव ब्रह्मणि समन्वयो न तु वाक्यविधयेति त्वया वाक्यान्वयसूत्रे वर्णितत्वात् । वसन्तादिवाक्यस्थपदानामपि तथैव तत्समन्वयस्य प्रदर्शितत्वाच्च । नन्वेवं सति श्येनवाक्यस्थश्येनपदस्य गुणपरत्वमपि स्यात् । तद्वाक्यशेषस्य कर्मनामधेयत्व एवान्वय

टि०— १ प्रदर्शितत्वाच्चेति—एवं च भवन्मते क्रममात्रतात्पर्यनिर्णायकान्यपि कर्मकाण्डीयोपक्रमादीनि भङ्क्त्वा कर्मकाण्डानां कर्मब्रह्मोभयपरत्वस्य “ ज्योतिरुपक्रमाधिकरणे ” [ ब्र० सू० १ । ४ । १० ] व्यवस्थापनेनोपक्रमादीनां तत्र तत्र तत्तदर्थव्यवस्थापकत्वनैयत्याभावाद्विष्णुपराणामपि सृष्टिवाक्यानां हरविरिञ्चिपरत्वमप्यपरिहार्यमिति भावः । एतेन विष्णूत्कर्ष एव श्रुत्यादीनां महातात्पर्यम् । अन्यथाऽनेकश्रुतिस्मृतियुक्तिविरोध एकवाक्यताभङ्गश्चेति कस्यचित्प्रलपनं परास्तम् । विकल्पासहत्वात् । तात्पर्ये महत्त्वं किमितराविषयकत्वमाहोस्विदवान्तरतात्पर्यसहकृतत्वम् । नाद्यः । विष्णूत्कर्षनिरूपणे प्रवृत्तस्य तव नास्तिकत्वापत्तेः । स्वर्गनरकादिप्रतिपादककर्मकाण्डस्थपदानां स्वर्गाद्यविषयकत्वेन स्वर्गादिसिद्ध्यभावेन परलोकसाधककर्माद्यननुष्ठानापत्तेः । न द्वितीयः । विनिगमकाभावेन विष्णावान्तरतात्पर्यं शिवविरिञ्चयोस्तु महातात्पर्यमित्यस्यैव सुवचत्वात् । उपक्रमादीनामानिर्णायकत्वस्य पूर्वमेव निरूपितत्वाच्च । न च पाशुपतवैरिञ्चाद्यागमेषु तयोः कारणत्वप्रतिपादनेऽपि न शास्त्रयोनित्वम् । पाशुपतादीनामयथार्थत्वसंभवात् । प्रतीतेरज्ञानमूलकत्वसंभवाच्चेति वाच्यम् । वैरिञ्चपाशुपतादिप्रदर्शितोपक्रमाद्यपेक्षया त्वत्प्रदर्शितोपक्रमादीनां विशेषानवगमात् । येन विष्णोरेव शास्त्रयोनित्वं प्रतिपाद्येत । किंच ब्रह्मणि गुणानामुपासनार्थमेव त्वयाऽङ्गीकृतत्वेनोपासनस्याज्ञानमूलकत्वेन भवदीयप्रतीतेरप्यज्ञानमूलकत्वापरिहारात् । उपक्रमादितात्पर्यलिङ्गैः सम्यङ्निरूप्यमाणे शिवादेरपि शास्त्रगम्यत्वाच्च । एतेन—“मां विधत्तेऽभिधत्ते मां विकल्प्योऽपोह्य इत्यहम् । इत्यस्य हृदयं साक्षान्नान्यो मद्वेद कश्चन ” इति । यच्च—व्याख्यानं कर्मविधात्री श्रुतिरपि मां प्रत्येव तद्विधत्ते । इन्द्राद्यभिधात्री च मामभिधत्ते । चत्वारि वागित्यादिश्रुत्याऽहं विविधरूपत्वेन कल्प्यः । “ न सुरां पिबेदित्यादिश्रुत्याऽहमेवाप्रियत्वादपोह्यः । एवंभूताया अस्याः श्रुतेरित्यभिप्रायमहं वेद न मत्तोऽन्य इत्यर्थः ” इति च निरस्तम् । उक्तश्लोकस्य स्वमात्रहृदयारूढस्याप्रामाणिकत्वात् । तथ्यनानारूपवतोऽनित्यत्वात्कल्पितनानारूपाभ्युपगमे परमतप्रवेशापत्त्या स्वमतहानिप्रसङ्गाच्चेत्याधिकं सुधियो विभावयन्तु ।

**स्फारात्तत्तत्पुराणागमवचनशतप्रापिता याऽन्यनिन्दा**
**तत्तद्भक्त्यादिसिद्ध्यै स्तवनविरचने सा भवेद्द्वारमात्रम् ।**

व्या०—इति वक्तुं शक्यत्वादिति चेत्तदपि दूषणं तव मतेऽस्माभिरापाद्यमेव । अस्माकमनेकार्थत्वानङ्गीकारादेव तन्न प्रसज्यते ।

अपि चोपक्रमादीनां विष्णौ व्यवस्थितत्वमप्यसिद्धम् । शैवादयोऽपि ह्युपक्रमादीनेवावलम्ब्य श्रुतीनां शिवादिपरत्वं वर्णयन्ति । उपपादयन्ति चोपक्रमादीनां शिवादिविषयत्वं तत्तद्गतपदशक्त्याऽपि प्रदर्शनेन । ननु शैवाः शिव एवोपक्रमादयो न विष्णौ विरिञ्चे वेति वर्णयन्ति । एवं वैष्णवा वैरिञ्चाश्च पक्षप्रतिपक्षेण वदन्ति। न चैतानि मतानि परस्परविरुद्धानि सर्वाण्यपि ग्राह्याणि। अतो बलाबलविचारावश्यंभावाद्बलवद्भिर्न्यायैरुपक्रमादीनां विष्णौ व्यवस्थितत्वसिद्धिरिति चेन्मैवम् । यथा भूमशब्दस्तवाविशेषविशेषसहितब्रह्मानन्दवाचकोऽपि तत्तदधिकारिणं प्रति योग्यतानुसारेण किंचित्किंचिद्ब्रह्मानन्दांशमेव बोधयति, तथा सृष्ट्यादिश्रुतयस्तदुपक्रमादयोऽनेककर्तृपरा अपि तत्तद्योग्यतानुसारेणैकैकमेव कर्तारं बोधयन्ति । श्रुतिवाक्ये हि तेषां कर्त्रन्तरबोधानुत्पादस्तु श्रुतिवाक्यानां कर्त्रन्तरपरत्वाभावाभिमानादित्युपपत्तेः । तस्मादुपक्रमादिबलान्न सृष्टिवाक्यानां विष्णौ [1]व्यवस्थितत्वसिद्धिरिति भावः ॥ ५३ ॥

ननु तत्तन्मतस्थानामभिमानमात्रं कथंचिदुपपद्यतां नाम । शैववैष्णववैरिञ्चपुराणागमेषु शिवादीनां परस्परसृज्यत्वसंहार्यत्वाराधकत्वादिना भूयसी निकर्षोक्तिर्दृश्यमाना सर्वेषां समानकक्ष्यतया जगत्कर्तृत्वेऽनुपपन्ना बलाबलविचारमन्तरेण न व्यवतिष्ठते । तद्विचारे च वैष्णवपुराणागमानां बलवत्त्वात्तदनुसारेणोपक्रमादिसहितानां सृष्टिश्रुत्यादीनां विष्णौ व्यवस्थितत्वं सिध्येदित्याशङ्क्याऽऽह—[2]स्फारादिति ।

टि०— १ व्यवस्थितत्वसिद्धिरिति—ततश्च भवन्मतरीत्याऽधिकरणस्यास्य वैयर्थ्यापत्त्या परमतानुसरणमेव ज्याय इति भावः ॥ ५३ ॥

२ स्फारादिति- प्रथमश्लोके सूचितं नहि निन्दान्यायं स्फुटयति—स चायं न्यायस्त्वयाऽवश्यमभ्युपगन्तव्यः। अन्यथा भवदीयपाञ्चरात्रादीनां वैष्णवतन्त्राणां प्रामाण्यं न स्यात् । तथा हि कूर्मपुराणे वैष्णवसंहितायां ( अ० १४ )—" स तेषां मायया जातं गोवधं गौतमो मुनिः । केनापि हेतुना ज्ञात्वा शशापातीव कोपनः ॥ १ ॥ भविष्यथ त्रयीबाह्या महापातकिभिः समाः । " इति गौतमशापान्प्रकृत्य तेषां शिवकेशवसंनिधौ " सर्वे संप्राप्य देवेशं शंकरं विष्णुमव्ययम् । अस्तुवल्लौकिकैस्तोत्रैरुच्छिष्टा इव सेवकाः " इत्यादिना गतिप्रार्थनायां—ततः पार्श्वे स्थितं विष्णुं संप्रेक्ष्य वृषभध्वजः । यत्किं तेषां भवेत्कार्यं प्राप्यं

व्या०— परस्परनिन्दावचनानि " नहि निन्दा निन्द्यं निन्दितुं प्रवर्ततेऽपि तु स्तुत्यं स्तोतुम् " इति न्यायेनोदितानुदितहोमनिन्दादिषु दृष्टेन तत्तद्देवताविषयनिश्चलभक्तिसिद्धिप्रयोजने स्तुतिविरचने द्वारमात्रत्वेनोपपन्नानि । दृश्यते ह्यापस्तम्बसूत्रे—" अथाप्युदाहरन्ति " इत्यारभ्य " तस्माच्छ्रुतितः प्रत्यक्षफलत्वाच्च

टि०—पुण्यैषिणां भुवि " इति पृष्टो विष्णुः—"न वेदबाह्ये पुरुषे पुण्यलेशोऽपि शंकर । तस्माद्वा वेदबाह्यानां रक्षणार्थं च पापिनाम् । विमोहनाय शास्त्राणि करिष्यावो वृषध्वज । एवं संबोधितो रुद्रो माधवेन मुरारिणा । चकार मोहशास्त्राणि केशवोऽपि शिवेरितः । कापालं नाकुलं शाक्तं भैरवं पूर्वपश्चिमम् । पाञ्चरात्रं पाशुपतं तथाऽन्यानि सहस्रशः । सृष्ट्वा तानूचतुर्देवौ कुर्वाणौ शास्त्रचोदितौ ॥ इति । ते तु तत्परिग्रहणानन्तरम्—" शिष्यानध्यापयामासुर्दर्शयित्वा फलानि तु । मोहयन्त इमं लोकमवतीर्य महीतले । बुद्धाश्रावकनिर्णन्धाः पाञ्चरात्रविदो जनाः । कापालिकाः पाशुपताः पाषण्डा ये च तद्विदः । यस्याश्नन्ति हवींष्येते दुरात्मानस्तु तामसाः । न तस्य तद्भवेच्छ्राद्धं प्रेत्येह च न तत्फलम् । वामाः पाशुपताचारास्तथा वै पाञ्चरात्रकाः । भविष्यन्ति कलौ तस्मिन्ब्राह्मणाः क्षत्रियास्तथा " इत्यादि । एवं कूर्मपुराणपर्यालोचनया पाञ्चरात्रादिवैष्णवतन्त्राणां मोहशास्त्रत्वं स्पष्टमेवावगम्यते । तथा स्कान्दे सूतसंहितायां—देवतानां मनुष्याणां न कुर्याल्लाञ्छनं बुधः । न कुर्यान्मोहतो वाऽपि यदि कुर्यात्पतत्यधः । श्रौतस्मार्तसमाचारे नाधिकारीति लाञ्छितः । लाञ्छिताश्च न संभाष्या न स्पृश्याश्च तथैव च । अदर्शनीयांस्तान् राजा देशाच्छीघ्रं प्रवासयेत् । " इत्यादिना शङ्खचक्रादिदेवतालाच्छनधारिणां पातित्यं दर्शितम् । त्वयैतत्सर्वं पूर्वोक्तन्यायमवलम्ब्यैव निर्वाह्यम् । तथा च प्रकृतेऽपि तथाऽभ्युपगमे बाधकाभाव इति निष्कर्षः ।

१ दृश्यते हीति—आपस्तम्बो हि स्वयं ब्रह्मनिष्ठोऽपि मुमुक्षूनज्ञान् प्रति कर्मानुष्ठापनार्थं स्वीयकल्पसूत्रे कर्माणि प्ररोचयन्संन्यासं निनिन्द । अयमंशस्तदीयाध्यात्मपटलादवगम्यते । तथा हि—आपस्तम्बधर्मसूत्रेऽष्टमेऽध्यात्मपटले "आध्यात्मिकान्योगाननुतिष्ठेन्न्यायसंहितानानैश्चारिकान् " इत्युपक्रम्य तत्र श्लोकोदाहरणं प्रतिज्ञाय " पूः प्राणिनः सर्व एव गुहाशयस्य, अहन्यमानस्य विकल्मषस्य । अचलं चलनिकेतं येऽनुतिष्ठन्ति तेऽमृताः " इत्यादिना कूटस्थनित्यमात्मस्वरूपं विषयसङ्गविधूननपुरःसरं ध्येयमिति चोक्त्वा महता संदर्भेण विषयसङ्गत्यागे कारणमभिधाय " आत्मन्पश्यन्सर्वभूतानि न मुह्येच्चिन्तयन्कविः । आत्मानं चैव सर्वत्र यः पश्येत्स वै ब्रह्मा नाकपृष्ठे विराजति " इति तादृशस्य ब्रह्मात्मैकरूपत्वाभिधानेन स्वात्मानुभवं प्रकटयामास ।

व्या०–विशिष्टानाश्रमानेतान्ब्रुवते ” इत्यन्तेन गार्हस्थ्यनिकर्षमूर्ध्वरेतसां त्रयाणामुत्कर्षं च केषांचिन्मतत्वेनोपन्यस्य त्रैविद्यवृद्धानां तु “ वेदाः प्रमाणमिति निष्ठा। तत्र यानि श्रूयन्ते व्रीहियवपश्वाज्यपयःकपालपत्नीसंबन्धान्युच्चैर्नीचैः कार्यमिति तैर्विरुद्ध आचारोऽप्रमाणमिति मन्यन्ते ” इति दर्शपूर्णमासादिकर्मानुष्ठानरहितोर्ध्वरेतसामाचारो वेदविरुद्धत्वादनाचार एवेति सकलत्रैविद्यवृद्धसंमतत्वेन स्वमतप्रदर्शनम्। तत्र कर्माण्यनुतिष्ठतामेव ब्रह्मलोकावाप्तिः। आश्रमान्तरप्रशंसतामपि महान्प्रत्यवाय इत्यत्र संमतिवचनोदाहरणं च “अथापि प्रजापतेर्वचनं, त्रयीविद्यां ब्रह्मचर्यं प्रजापतिं (जातिं) श्रद्धां तपो यज्ञमनुप्रदानं, यदा तानि कुर्वते तैरित्सह स्मो रजो भूत्वा ध्वंसतेऽन्यत्प्रशंश्सन् ” इति। तथा महाभारतेऽपि शान्तिपर्वणि–ज्ञातिवधनिर्वेदात्संन्यासोद्युक्तं युधिष्ठिरं प्रति तद्भ्रातॄणां महर्षीणां भगवतः कृष्णस्य च वचनेषु भूयसी संन्यासनिन्दा दृश्यते। एवं सत्यपि संन्यासस्याऽऽश्रमान्तरतो न काचन हानिस्तव मते। प्रत्युत संन्यासस्य गार्हस्थ्यादुत्कर्ष एव त्वया “ कृत्स्नभावात्तु गृहिणोपसंहारः ” ( ब्र० सू० ३। ४। ४७ ) इत्यधिकरणे समर्थितः। तत्र हि गृहस्थाश्रमः संन्यासादुत्कृष्टश्छन्दोगोपनिषदि “ कुटुम्बे शुचौ देशे स्वाध्यायमधीयानः ” इति गृहस्थाश्रममुपक्रम्य “ स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसंपद्यते, न च पुनरावर्तते ” इति तन्मोक्षमुक्त्वोपसंहारात्। उपसंहारत्वेन तत्र तात्पर्यावगमादिति पूर्वपक्षं कृत्वा संन्यास एव गार्हस्थ्यादधिकः। तन्मोक्षस्य गृहस्थमोक्षादधिककालसाध्यत्वेन तदतिशायित्वात्। गृहिणोपसंहारस्तु देवविषयो न मानुषविषयः “कृत्स्ना ह्येव गृहिणो देवाः कृत्स्ना ह्येते यतयः” इति पौत्रायणश्रुतौ। “ देवा एव ब्रह्मचारिणो गृहस्था देवा वनस्था यथा ह्येते मुनय एवं सर्ववर्णाः सर्वाश्रमाः सर्वं ह्येते कर्म कुर्वन्तीति ” कौण्डरव्यश्रुतौ च सर्ववर्णाश्रमाचारवत्त्योक्तानां देवानां गृहस्थानां सतामपि मनुष्यसंन्यासिभ्योऽधिकत्वादिति सिद्धान्तितम्। न चाऽऽपस्तम्बादिवचनान्यपि मनुष्यसंन्यासिभ्यो देवोत्कर्षविषयाणि भवन्त्विति वाच्यम्। “ तैर्विरुद्ध आचारोऽप्रमाणम् ” इत्यापस्तम्बेन संन्यासादेरनाचारत्वस्यैवोक्तत्वात्। कर्मानुष्ठानपुत्रदारादिपोषणव्यग्राणां गृहस्थानाममृतत्वं न संभवतीति संन्यासाद्युत्कर्षवाद्युक्तगार्हस्थ्यनिकर्षहेतूद्धारसमये “ अथाप्यस्य प्रजातिममृतमाम्नाय आह–प्रजामनु प्रजायसे तदु ते मर्त्यामृतमिति। अथापि स एवायं विरूढः पृथक् प्रत्यक्षेणोपलभ्यते दृश्यते चापि सारूप्यं,

व्या०—देहत्वमेवान्यत् ” ( आ० धर्मसू० प्र० २। पटल ९) इति श्रुतियुक्तिभ्यां गृहस्थानां पुत्रपौत्रादिरूपेणैवामृतत्वव्यवस्थापनेन गार्हस्थ्योत्कर्षप्रतिपादनस्य मानुषगृहस्थविषयत्वस्फुटीकरणाच्च । नहि त्वन्मते देवानां पुत्रपौत्रादिरूपेणामृतत्वं संभावनीयम् । त्वया “ न देवपदवीं प्राप्ता ब्रह्मदर्शनवर्जिताः ” इति सर्वेषां देवानां ब्रह्मसाक्षात्कारवत्त्वस्य स्वीकृतत्वेन तेषां मोक्षरूपामृतत्वस्यैव संभवात् । महाभारतेऽपि “ पन्थानं पावनं हित्वा जनकं मौढ्यमास्थितम् । तं ददर्श प्रिया भार्या भैक्ष्यवृत्तिमकिंचनम् ” ( ...... ) इत्यादिवैदेहसंन्यासनिन्दादिषु मनुष्यगृहस्थस्यैवोत्कर्षप्रतिपादनं स्पष्टमेव । तस्मान्मनुष्यं लोके कर्माण्यनुष्ठापयितुं कल्पसूत्रं कृतवताऽऽपस्तम्बेन कर्मप्ररोचनार्थं संन्यासाद्याश्रममनाचारत्वेन “ बुद्धेः क्षेमप्रापणम् । तच्छास्त्रैर्विप्रतिषिद्धम् । बुद्धेश्चेत्क्षेमप्रापणमिहैव न दुःखमुपलभेत ” ( आ० ध० सू० प्र० २ । प० ९ ) इति ज्ञानसाध्यामृतत्वफलं मिथ्यात्वेन च दूषयित्वा गृहस्थानामेव कर्मानुष्ठानादेव स्वर्गोऽमृतत्वं चेति वर्णितम् । महाभारते च “ अथैककालिको वाऽहमेकैकस्मिन्दिनक्षये । चरन्भैक्षं मुनिर्मुण्डः क्षपयिष्ये कलेवरम् । ( शां० प० ) इत्युक्तवन्तं युधिष्ठिरं संन्यासोद्योगान्निवर्तयितुकामैस्तस्य भ्रातृभिर्गार्हस्थ्यप्ररोचनार्थं संन्यासं दूषयित्वा गार्हस्थ्योत्कर्षो वर्णित इत्येवं गतिर्वक्तव्या । एवं पुराणागमेषु तत्तद्देवताराधनोपासनाद्यनुष्ठापनार्थं प्रवृत्तेषु तत्प्ररोचनार्थं देवतान्तरानिकर्षो वर्णित इति किं न संगच्छते । अङ्गीकृतं च त्वयाऽपि “ द्वेषाच्चैद्यादयो नृपाः ” इत्यादौ भगवतः कृपालुत्वातिशयतात्पर्येण द्वेषान्मुक्तिवर्णनं, न तु नरकसाधनेन भगवद्द्वेषेण मुक्तिरस्तीति वदता पुराणेष्वन्यार्थतात्पर्येणासदर्थकथनम् । तत्र दृष्टान्तोऽप्यनुव्याख्याने दर्शितः—

“ यथा क्रुद्धः पिता पुत्रं मरेत्याक्षेपपूर्वकम् ।
प्रोक्तस्यान्यस्य कृत्यर्थं वदत्येवं पुराणकम् ॥ ” इति ।

एवमेव ब्रह्मादिषु परस्परनिकर्षवचनानामप्यन्यपरत्वोपपत्तेर्न तत्र बलाबलविचारापेक्षेति भावः । पुराणानां बलाबलविचारेऽपि परस्य न तत्प्रत्याशेत्युपपादितमस्माभिः शिवतत्त्वविवेके । यत्तु शिवतत्त्वविवेके—

“ क्वचिद्ब्रह्मा क्वचिद्विष्णुः क्वचिद्रुद्रः प्रशस्यते ।
नानेन तेषामाधिक्यं न्यूनत्वं वा कथंचन ॥
तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ।

कर्मानुष्ठापनार्थं किमु निरतिशयां ब्रह्मसंस्थादिनिन्दा-
मापस्तम्बादिवाक्ये न कलयसि ततः काऽस्य हानिस्तवेष्टा॥५४॥
इत्यप्पदीक्षितकृतौ मध्वतन्त्रविमर्दने ।
दृष्ट्वा सन्तोऽनुगृह्णन्तु चतुर्थनयदूषणम् ॥ ५५ ॥

इति समन्वयाधिकरणदूषणप्रकरणम् ॥

न ध्येयं ब्रह्म नेदं यदिदमिति गिरि ह्यभ्युपेतं त्वयाऽतो
ध्येयार्थानां श्रुतीनां क्वचिदपि न च तद्वाच्यमित्यभ्युपेयम् ।

---

व्या०— पुराणानि प्रणीतानि विद्वांस्तत्र न मुह्यति " ॥
इत्यादिवचनान्युदाहृत्य पुराणेषु त्रयाणां परस्परोत्कर्षापकर्षवचनानि कल्पभेदेन व्यवस्थितार्थानि प्रतीतार्थपराण्येवेत्युक्तं, तद्वस्तुगतिमनुरुध्योक्तम् । इह तु परमते त्रयोऽप्येते विश्वकर्तारः स्युरित्यापादननिर्वाहाय पुराणेषु परस्परं सृज्यत्ववचनान्यप्यर्थवादाः स्युरित्यापादितमिति न विरोधः । एतेन श्रुतिष्वपि त्रयाणां परस्परनिकर्षवचनानि दत्तोत्तराणि । दृश्यन्ते हि श्रुतिष्वप्याश्रमान्तरनिन्दावचनानि—" किं नु मलं किमजिनं किमु श्मश्रूणि किं तपः । पुत्रं ब्रह्माण इच्छध्वं स वै लोको विदाविदः " (...... ) " नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः । तस्मात्पुत्रो मातरं स्वसारं नाधिरोहति " ( ) इत्यादीनि । एवमेतान्युपपद्यन्त इत्यलमतिविस्तरेण ॥ ५४ ॥

अथेक्षत्यधिकरणदूषणप्रकरणम् ।

एवमुपक्रमादिलिङ्गैः पुराणाद्युपबृंहणैर्वा न सृष्ट्यादिश्रुतीनां विष्णौ व्यवस्थितत्वसिद्धिरिति दर्शितम् । इदानीं परमते विष्णुपरत्वमेव तासां कथंचिदपि न सिध्येदिति दर्शयितुमीक्षत्यधिकरणे व्यवस्थापनीयत्वेन परस्याभिमतं ब्रह्मणो वाच्यत्वं दूषयति—न ध्येयमिति ।

---

टि०— १ विश्वकर्तार इति—एकमेव चैतन्यं प्रकृतिगतसत्त्वरजस्तमोगुणोपाधिकं सद् विष्णुविरिञ्चिशिवरूपतां भजत इति पूर्वमेव प्रतिपादितं वस्तुतत्त्वमिति ॥ ५४ ॥ ५५ ॥

२ वाच्यत्वमिति—इत्थं हि तदीयमधिकरणम्—न ब्रह्मणः शास्त्रमुख्यार्थत्वमुपपद्यते । यतस्तत् " यतो वाचो निवर्तन्ते " ( तै० उ० २ । ४ ) इत्यादिश्रुतेः शब्दावाच्यम् । नह्यवाच्यस्य शास्त्रमुख्यार्थत्वं संभवति । अतो न शास्त्रोक्तकारणत्वं तस्येति पूर्वपक्षे । राद्धान्तः—" स एतस्मात् " ( प्र० ५ । ५ ) इत्यादिश्रुतिभिर्ब्रह्मण ईक्षणीयत्वावगतेस्तदन्यथानुपपत्त्या वाच्यमेव तत् । अतस्तस्य शास्त्रयोनित्वोपपत्तेः कारणत्वसंभव इति ।

नो चेन्न ध्येयमेतत्कथमिति भवति स्याद्वार्यैव शङ्का
यद्वाचेति श्रुतिश्च क्षिपति तदसनायैव वाच्यत्वमस्य ॥ ५६ ॥

व्या०—त्वया तावदत्यन्तमेव तदव्यक्तं ब्रह्मेत्यभ्युपगम्य तस्य तदव्यक्तत्वमाक्षेपसमाधानाभ्यां स्थापितं "तथाऽन्यत्प्रतिषेधात्" (ब्र० सू० ३ । २ । ३७)। इत्यधिकरणे। तदित्थम्—यदुक्तं "तदव्यक्तमाहेत्यधिकरणे नित्याव्यक्तं ब्रह्मेति"। तदनुपपन्नम् । उपासकानां हृदयेष्वाविर्भूयोपासनाकाले तस्य स्फुरणात् । नहि परमात्मनोऽन्यदुपास्यम् । तदन्योपासनेन मुक्त्ययोगात् । न चोपासनाकाले तत्तद्धृदयस्थतया प्रतीतस्य ब्रह्मत्व उपासकबहुत्वेन तद्बहुत्वापत्तिर्दोषः । स्वरूपभेदाभावेऽपि ब्रह्मरूपाणां विशेषबलेन नानात्वोपपत्तेरिति पूर्वपक्षे राद्धान्तः—यथा जीवानन्दादेरन्यद्ब्रह्म तथोपासनाकाले प्रतीतादपि "यन्मनसा न मनुते येनाऽऽहुर्मनोर्मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" (के० उ० १ । ५) इति श्रुतौ ब्रह्मण उपास्यत्वप्रतिषेधात् । जीवानन्दादिष्वल्पत्वस्येवोपासनाकाले प्रतीतेऽपि व्यक्तत्वादेर्भेदहेतोः सत्त्वाच्च । तस्मादुपासकानां हृदयेषु ब्रह्मणः प्रतिबिम्बविषय एवोपासनालम्बनम् । तदुपासनयैव च प्रतिमोपासनयेव तद्गतं ब्रह्म प्रसन्नं सदव्यक्तमप्यचिन्त्यापरिमितस्वशक्तिबलादपरोक्षी भवतीति युक्तम् । तथैव ब्रह्मतर्कवचनं—पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिम्बितम् । ब्रह्मैव प्रतिबिम्बे यदतस्तेषां फलप्रदम् । यदुपासा च भवती प्रतिमोपासना यथा । दृश्यते त्वपरोक्षेण ज्ञानेनैव परं पदम्" इति । तस्माद्युक्तमव्यक्तत्वं ब्रह्मण इति।

एवमनुपास्यं ब्रह्मेत्यङ्गीकुर्वता त्वयोपासनाप्रकरणेषूपास्यसमर्पकाणां श्रुतिवचनानां तद्वाच्यं न भवतीत्यङ्गीकार्यम् । तद्वाच्यताङ्गीकारे कथं तदनुपास्यमिति शङ्काया अनिवार्यत्वात् । नहि संभवत्युपासनाविधिषूपास्यसमर्पकैः पदैर्ब्रह्मोपास्यतया विधीयत उपास्यं च न भवतीति । एतच्छङ्कानिरसनायैव हि "यन्मनसा न मनुते" इति मन्त्रसंनिधावाम्नायमानं "यद्वाचाऽनभ्युदितं येन वागभ्युद्यते । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" (के० उ० १।४) इति मन्त्रान्तरं ब्रह्मणो वाच्यत्वं प्रतिक्षिपति। तेन हि सर्ववागविषयभूतं ब्रह्मोपासनाविधिप्रकरणेषु "सर्वं खल्विदं ब्रह्म" (छा० ३।१४।१) इत्यादिवाक्यश्रुतानामुपास्यसमर्पकाणां ब्रह्मादिपदानामप्यर्थो न भवतीति प्रदर्शनेनैषा शङ्का नि-

टि०— १ तदित्थमिति—मध्वसिद्धान्तानुसारेणार्थान्तरस्य वर्णनीयतया तन्मतसिद्धसूत्रतदर्थानुवादोऽयम्।

व्या०—रस्ता भवति । तस्मादवाच्यमिति त्वयाऽभ्युपगन्तव्यम् । अनुपास्यं त्वदीयं ब्रह्म सृष्ट्यादिवाक्यस्थसद्ब्रह्मात्मनारायणादिपदानामपि वाच्यं न भवेदिति न तस्य जगत्कर्तृत्वादिसिद्धिरिति भावः ॥ ५६ ॥

नन्वेतावता ध्यानविधिवाक्येषु ध्येयसमर्पकाणां पदानां ब्रह्म प्रतिपाद्यं न भवतीत्यापादितम् । न तु सृष्टिवाक्येषु स्रष्टृसमर्पकाणामपि तेषां तत्प्रतिपाद्यं न भवतीति । उपास्यसमर्पकपदाप्रतिपाद्यत्वमात्रेणैतस्यानुपास्यत्वनिर्वाहात् । तन्निर्वाहाय प्रवृत्तस्य यद्वाचेति मन्त्रस्यापि तावन्मात्रविषयत्वोपपत्तेः । न चोपासनाविधिषूपास्यसमर्पकाणि यानि ब्रह्मनारायणादिपदानि, तान्येव सृष्टिवाक्येषु स्रष्टृसमर्पका-

टि०— १ वाच्यं न भवेदिति—तथा चाधिकरणमिदं व्यर्थमिति भावः । यत्तु—उपासनाकालेषूपासकचित्ते प्रतीतप्रतिबिम्बरूपाद्बिम्बभूतं ब्रह्मान्यदित्यङ्गीकारेऽपि सर्वाण्यपि श्रुतिवाक्यान्युपासनापेक्षितब्रह्मगुणसमर्पकाणीति चाङ्गीकारेऽपि ब्रह्मणः सर्वशब्दवाच्यत्वानपायात् । वासनामयरूपस्य मनसाऽवलोकनं ध्यानमिति चित्ते प्रतीतप्रतिबिम्बरूपस्य वासनामयत्वोपगमात् । संस्कारापरनामकवासनायाश्च पूर्वानुभवजन्यत्वादौपनिषदस्य च मानान्तरागोचरस्य वस्तुनोऽनुभवस्य वेदादिशास्त्रेणैवोत्पाद्यत्वादिति । तन्न । " यद्वाचेत्यादिश्रुत्याऽनुपास्यस्य बिम्बभूतस्य ब्रह्मणो वाच्यत्वनिषेधेन सर्वशब्दवाच्यत्वस्य सुतरामसंभवात् । न च वाच्यत्वाभावे तत्प्रमितिर्न स्यादिति वाच्यम् । प्रतिबिम्बमुखेन बिम्बमुखप्रमितिवत्तत्प्रमित्युपपत्तेर्वाच्यत्वस्याकिंचित्करत्वात् । न चाप्रतर्क्यमिति श्रुतिविरोध इति वाच्यम् । तस्याः शुष्कतर्कागम्यत्वपरत्वस्य त्वयैव पूर्वमुक्तत्वात् । प्रतिबिम्बे वासनामयत्वोपगमस्य लोकविरुद्धत्वात् । संस्कारस्यानुभवजन्यत्वेऽपि विभिन्नविषयकत्वेनाप्रयोजकत्वात् ।

एतेन—' उपासनाकालप्रतीतप्रतिबिम्बजनकवासनाहेत्वनुभवोत्पादनायाखिलवेदवाक्यैर्ब्रह्मगुणवर्णनात्तद्वर्णनस्य वचनवृत्तिं विनाऽयोगात् । सर्वस्योपासनार्थस्याप्याखिलवेदविषयश्रवणमननजनितानुभवोत्पन्नसंस्कारद्वारोपासनार्थत्वादित्यभिप्रायात् । सर्वैरप्येवमेव वाच्यत्वात् । बिम्बभूतस्य वस्तुनः साक्षादुपास्यत्वाभावेऽपि ज्ञातव्यार्थत्वेन वाच्यत्वावश्यंभावाच्चेति परास्तम् । श्रुत्या वाच्यवृत्त्या गुणवर्णनस्योपास्यव्यधिकरणत्वात् । ध्यानज्ञानयोः समानविषयत्वेन कार्यकारणभावस्य निरूपणीयतया बिम्बस्याध्येयत्वे तज्ज्ञानस्य वैफल्येन बिम्बस्य वाच्यत्वोक्तेरनावश्यकत्वात् । अत एव—उपासनावज्ज्ञानस्याप्यावश्यकत्वं प्रत्युक्तम् । उपासनाविधिजनितत्वस्य वासनामयेऽसंभवाद्वाच्यत्वस्यैवोपासनासंभवेनोपासनार्थत्वादित्यस्योक्तार्थकल्पनस्याप्रामाणिकत्वात् । सर्वथाऽपि वाच्यत्वाभ्युपगमे बिम्बस्य व्यक्तत्वापत्त्या " तदव्यक्तमाह हि " इत्यधिकरणविरोधस्तव मते ब्रह्मणाऽपि दुरुद्धरः । तस्माद्द्वैत्यभिमतमधिकरणनिरूपणमेवाकामेनापि त्वयोररीकर्तव्यमिति दिक् ॥ ५६ ॥

ध्येयार्था एव वाच्यास्तव निगमगिरः स्रष्टृतादीन्वदन्त्य-
स्त्वं हि ध्यानैकनिष्ठां गुणगणफणितिं ब्रह्मणो वक्ष्यशेषाम् ।
तत्तासां ब्रह्मणः स्यात्प्रतिफलनभिदा काऽपि वाच्या मते ते
यद्वाचेत्येवमाद्यैः कतिपयवचनैर्ब्रह्म शुद्धं च लक्ष्यम् ॥ ५७ ॥

---

व्या०—ण्यतस्तेषां क्वचिद्वाच्यं न भवतीति निर्णयेऽन्यत्रापि तद्वाच्यं न स्यादिति वाच्यम् । प्रसिद्ध्यनुसारेण विष्णवाख्यब्रह्मणस्तद्वाच्यत्वेऽप्युपासनाविधिषु तेषामनुपपत्त्या वाच्यार्थमपहाय तत्प्रतिबिम्बलक्षकत्वोपपत्तेरित्याशङ्क्याऽऽह—ध्येयार्था इति ।

त्वन्मते स्रष्टृत्वादिप्रतिपादकान्युपास्यसमर्पकाण्येव वाक्यानि, त्वया सर्वत्रापि ब्रह्मगुणवर्णनमुपासनार्थमेवेति "आध्यानाय प्रयोजनाभावात्" (ब्र०सू० ३।३।१५) इत्यधिकरणे व्यवस्थापितत्वात् । तत्र हि सद्विद्याभूमविद्यादहरविद्यावैश्वानरविद्यादिषु सर्वासु विद्यासु ब्रह्मगुणवर्णनं सर्वविद्योक्तगुणोपसंहारेणोपासना कर्तव्येत्यत्र प्रमाणम् । अन्यथा तद्वैयर्थ्यात् " इत्युपसंहाराधिकरणोक्तं (ब्र० सू० ३।३।६) अयुक्तम् । तासु ब्रह्मगुणवर्णनस्य तत्तद्गुणश्रवणद्वारा जनलोकादिफलविशेषार्थत्वोपपत्तेः । उपासनार्थत्वे सर्वगुणानामेकत्रैवोक्तिप्रसङ्गेन प्रकरणभेदायोगादित्याक्षिप्य समाहितम् । सर्वस्यापि ब्रह्मगुणवर्णनस्योपासनार्थतया निःश्रेयसरूपमहाफलप्रयोजनत्वे संभवति जनलोकादिक्षुद्रफलप्रयोजनत्वायोगात् । "आध्यानार्था गुणाः सर्वे वक्तव्याश्चैव सर्वशः । नान्यत्प्रयोजनं मुख्यं गुणानां कथने भवेत्" इति ब्रह्मतन्त्रवचनाद्विप्रकीर्णान् ब्रह्मगुणाननेनोपसंहृत्योपासीनस्य तदनुसारेण मुक्तावानन्दातिशयो भवेदिति तद्वौर्लभ्याय बहुषु प्रकरणेषु विप्रकीर्णतया गुणवर्णनोपपत्तेश्च । सर्वमपि ब्रह्मगुणवर्णनं ध्यानार्थमेवेति सर्वविद्योक्तगुणोपसंहारः कर्तव्य इति निरूपितम् । तस्मात्स्रष्टृत्वादिप्रतिपादकानां श्रुतिपुराणेतिहासागमादीनां सर्वेषामुपास्यत्वेन त्वदभिमतब्रह्मप्रतिबिम्बविशेष एव पर्यवसानं स्यादिति तत्रैव वाक्यशेषादिभिर्यूपाहवनीयादिन्यायेन ब्राह्मव्युत्पत्तिकानां ब्रह्मनारायणादिपदानां शक्तिः स्यात् । अन्येषां वादिनां साक्षाद्ब्रह्मण्येव ब्रह्मनारायणादिपदानां शक्तिरित्यभ्युपगमस्य तदेव सृष्टिवाक्यादिप्रतिपाद्यमिति भ्रममूलत्वेन भ्रान्तित्वोपपत्तेः । न चैवं "तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इत्यादिष्वपि ब्रह्मपदादीनां बिम्बभूतब्रह्मविषयत्वाभावापात इति वाच्यम् । प्रतिबिम्बवाचिनां तेषां लक्षणया तत्र ब्रह्मविषयत्वोपपत्तेः । न चात्र वैपरीत्यं

व्या०—शङ्कनीयम् । ब्रह्मविषयाणि ब्रह्मपदानि मुख्यानि प्रतिबिम्बविषयाणि लाक्षणिकानीति प्रायः सर्वेषां श्रुतिपुराणादीनामुपास्यत्वस्रष्टृत्वसंहर्तृत्वान्तर्यामित्वशौर्योदार्यादिगुणवर्णनपरतया प्रतिबिम्बविषयत्वावश्यंभावेन तेषां भूयसां लक्षकत्वकल्पनाया अयुक्तत्वात् । " यन्मनसा न मनुते " ( के० उ० १ । ५ ) " यतो वाचो निवर्तन्ते " ( तै० उ० २ । ४ ) " एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते " ( प्र० ५ । ५ ) इत्यादीनां त्वदभिमतवीक्षणीयबिम्बभूतब्रह्मविषयाणां कतिपयवचनानामेव लक्षकत्वकल्पनस्योचितत्वात् । तस्मादित्थमत्र तव मतं पर्यवस्येत्—वाङ्मनसपथातीतं नित्याऽव्यक्तमुपासनानन्तरं मुच्यमानानां मुक्तानां च साक्षात्कारस्यैव विषयभूतं परं ब्रह्म " तदेव ब्रह्म त्वं विद्धि " इत्यादिभिः कैश्चिदेव वचनैर्लक्षणया प्रतिपाद्यम् । तस्य प्रतिबिम्बविशेषस्तु जीववदनादिः कर्तृत्वादिमान् । उपासकहृदयेषूपास्य-

टि०— १ अनादिरिति—एवं च श्रुत्यादिनिरूपितानामुपास्यतावच्छेदकगुणानां सगुणे ब्रह्मण्युपपन्नतया तस्य चोपास्यत्वेन वाच्यत्वमिति भावः । एतेन मध्वमतेऽस्याधिकरणस्यासंगतिः सूचिता । तथा हि—प्रथमाधिकरणे जिज्ञास्यस्य गुणपूर्णत्वं ब्रह्मशब्देनोपक्षिप्य जन्मादिशास्त्रयोनित्वाधिकरणाभ्यां लक्षणप्रमाणोपन्यासेनातिव्याप्तिनिरासपूर्वकं स्फुटीकृत्य समन्वयाधिकरणेन ब्रह्मणो वेदमुख्यार्थत्वमुपपादितम् । उक्तं हि तत्त्वप्रकाशिकायामीक्षत्यधिकरणे—सकलजगज्जन्मादिकारणत्वेन ब्रह्मैव मुख्यार्थ इत्यभिहितम् । " उपक्रमादिभिर्निर्णीतस्य मुख्यार्थत्वात् " इति । ततश्च त्वत्सिद्धान्ते निर्गुणकथैव पूर्वं कुत्रापि न प्रसक्ता । अतः " यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह " ( तै० उ० १ । ४ ) " अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यत् " ( क० ३ । ५ ) " अवचनेनैव प्रोवाच " ( नृ० उ० ता० ७ ) " यद्वाचाऽनभ्युदितं येन वागभ्युद्यते " " यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतम् " ( के० उ० १ । ७ ) इत्यादिश्रुतिभिर्न तच्छब्दगोचर इत्याक्षेपस्याप्रसक्तिः । पूर्वमनुपस्थापिते निर्विशेषे वाच्यत्वाक्षेपायोगात् । उपस्थिते च सगुणे शास्त्रप्रामाण्यसमर्थनेन वाच्यत्वस्य दृढीकरणाच्च । अद्वैतमतरीत्याऽऽक्षेप इति चेन्न । तैर्गुणपूर्णस्य ब्रह्मणो वाच्यत्वस्याङ्गीकृतत्वेन तथात्वायोगात् । निर्गुणस्योक्तश्रुत्याऽवाच्यत्वाभ्युपगमेऽपि तस्य त्वया वाच्यत्वं न समर्थितमिति पूर्वपक्षसिद्धान्तयोर्भिन्नविषयकत्वापत्तेः । न च जिज्ञास्यस्यावाच्यत्वात्सविशेषत्वे चाशब्दमित्यादिश्रुतिरनुपपन्ना स्यादिति पूर्वपक्ष इति वाच्यम् । तथा सत्यवाच्यत्वं परित्यज्य निर्विशेषत्वस्यैव निरसनीयत्वेन तदुपजीव्यावाच्यत्वनिरासस्याऽऽकस्मिकत्वापत्तेः । " यतो वाचो निवर्तन्ते " इतिवत "साक्षी

मध्वशास्त्रमुखमर्दने मनागप्पदीक्षितकृताविदं बुधाः ।
पश्यत प्रणयवश्यचेतसः पञ्चमाधिकरणस्य दूषणम् ॥ ५८ ॥
इतीक्षत्यधिकरणदूषणप्रकरणम् ॥
इत्थं त्वत्क्लृप्तयैव प्रतिहतिमयति न्यायमर्यादया ते

---

व्या०—रूपेणाभिव्यक्तिशाली सृष्टिश्रुत्यादिभिस्तदनुसारिपुराणादिभिश्च शक्त्या प्रतिपाद्य इति ।

एवं च यद्यपि त्वदन्ये सगुणब्रह्मवादिनः स्वस्वाभिमते ब्रह्मणि सृष्टिश्रुत्यादीनामुपक्रमादिकं योजयेयुस्तथाऽपि त्वन्मते तासां सोपक्रमादिकानां त्वदभिमतब्रह्मप्रतिबिम्बमेव वाच्यमिति वक्तव्यमासीदिति ब्रह्मणि तद्योजनमत्यन्तनिरालम्बनमेवेति भावः ॥ ५७ ॥ ५८ ॥

॥ अथोपसंहारप्रकरणम् ॥

ऐवं परमतमर्यादयैव तदीयपञ्चाधिकरणीदूषणं प्रतिज्ञातं निर्व्यूढमित्युपसंहरन्ननेनैवाग्रिमाधिकरणानामपि दुष्टत्वान्न पृथग्दूषणमिह क्रियत इत्याशयेनाऽऽह—इत्थमिति ।

त्वया हि पञ्चाधिकरण्या अनन्तरस्य प्रथमाध्यायशेषस्य प्रवृत्तिरित्थमुपपा-

---

टि०—चेता केवलो निर्गुणश्च" ( श्वे० ६ । ११ ) "निष्कलं निष्क्रियं शान्तम्" ( श्वे० ६ । १९ ) इत्यादिनिर्विशेषत्वप्रतिपादकश्रुतीनां बहुलमुपलम्भात् । ईक्षणीयत्वस्यावाच्ये निर्विशेषेऽपि सत्त्वेनानैकान्तिकतया वाच्यत्वासाधकत्वात् । न च प्रबलेनेक्षणीयत्वेनाशब्दत्वं बाध्यमिति वाच्यम् । बलवताऽशब्दत्वेनेक्षणीयत्वस्यैव बाध इति वैपरीत्यापत्तेश्च । "ईक्षतिकर्मव्यपदेशात्" [ ब्र० सू० १ । ३ । १३ ] इति सूत्रे कर्मशब्दं प्रणयतः सूत्रकृत ईक्षतेरित्यनेनेक्षणीयत्वलक्षणाकल्पनाया असंमतत्वात् । "वाच्यमीक्षतेः" इति लघुन्यासं परित्यज्य "ईक्षतेर्नाशब्दम्" इति गुरुन्यासे बीजाभावात् । तथा च कारणस्य सतो ब्रह्मणो वाच्यत्वमपरिहार्यमिति पूर्वपक्षानुत्थितेरस्याधिकरणस्य तव मतेऽसांगत्यमिति व्यर्थमिदमधिकरणमिति दिक् ॥ ५७ ॥ ५८ ॥

इति टिप्पण्यामीक्षत्यधिकरणदूषणं समाप्तम् ॥

१ ननु प्रतिज्ञातार्थस्य पञ्चाधिकरणीदूषणस्य समाप्तत्वेनोत्तरग्रन्थस्यानुत्थितिरित्याशङ्क्य पूर्वोपदर्शितयुक्तिजालेनैवोत्तराधिकरणानां निराकरणं सुलभमिति तदकरणे बीजं प्रदर्शयन्नेवोत्तरयति—एवमिति ।

२ निर्व्यूढम्—निर्विघ्नं संपन्नमित्यर्थः । दुष्टत्वात्—दुष्टत्वस्य प्रत्येतुं शक्यत्वादित्यर्थः ।

शास्त्रस्यास्यान्तरङ्गे मुखनयनिकरे दूषणीयं किमग्रे ।
तेनैवाग्रे नया हि स्फुटमतिशिथिलास्ते यदि स्युः समर्था-
स्त्वद्दृष्टैर्वेदवाक्यैर्जहिहि जड तदा न्यायचिन्तां दुरन्ताम् ॥५९॥

व्या०—दिता—"तत्तु समन्वयादिति विष्णोः शास्त्रगम्यत्वे हेतुत्वेनोपक्रमादितात्पर्यलिङ्गरूपः समन्वयः सिद्धवदुपन्यस्तः । न तु तत्रोपक्रमादिर्विष्णावेव स्थित इति न्यायैः स्थापितम् । तद्यावत्तेषां वाक्यशेषानुदाहृत्य पूर्वोत्तरपक्षप्रथनेन समन्वयो न प्रपञ्च्यते तावदयमनुपन्यस्तप्राय एव । अन्यथा शैवादयोऽपि समन्वयादित्येव सिद्धवद्धेतुमुपन्यस्य शिवादीनां शास्त्रगम्यत्वं प्रसाधयेयुः । अतः समन्वयविभागेन प्रपञ्चनार्थमध्यायशेष आरभ्यते" इति ।

तत्रोपरितनेष्वपि सर्वेष्वधिकरणेषु विष्णौ समन्वयप्रपञ्चनरूपः सिद्धान्तः सृष्ट्यादिवाक्यरूपशास्त्रप्रतिपाद्यत्वं विष्णोर्न संभवतीति पञ्चमाधिकरणसिद्धान्तदूषणेन ग्रस्तो नोन्मज्जनमर्हतीति स्पष्टमेव । तत्तद्वाक्यानां तत्तदधिकरणपूर्वपक्षोपपादितदेवतान्तरपरत्वस्य निराकरणमप्यनुपपन्नम् । विष्णौ समन्वितानामपि तत्तद्वाक्यानां तृतीयचतुर्थाधिकरणदूषणोक्तरीत्या देवतान्तरपरत्वस्यापि संभवादित्यपि स्पष्टमेव । यद्यपि तत्तदधिकरणविषयवाक्येषूपक्रमोपसंहाराधिगतानां विष्णुविषयश्रुतिलिङ्गानां निरवकाशत्वेन प्राबल्यं, विद्वद्रूढ्या महायोगेन प्रवृ-

टि०— १ अस्य शास्त्रस्य—मध्वसिद्धान्तप्रतिपादकस्य । अन्तरङ्गे—उपोद्घातततया प्रधाने । मुखनयनिकरे—पञ्चाधिकरण्यात्मकन्यायजाले । त्वत्कल्पतया न्यायमर्यादया—पूर्वनिर्दिष्टया तया । प्रतिहतिं—शैथिल्यम् । अयति—प्राप्ते सति । तेनैव न्यायेनाग्रेऽनया हि—अपि शिथिलैव त्वद्दृष्टैर्वेदवाक्यैः—त्वन्मात्रसाक्षिकैः कमठादभिः । ते यदि समर्थास्तदा दुरन्तां न्यायचिन्ताम्—शास्त्रविचारं त्यज । कल्पितवेदवाक्यैरेव स्वार्थसिद्धेरिति भावः ।

२ स्थापितमिति—एवं च तत्कर्तव्यताया आवश्यकत्वं सूचितम् । उक्तं च तत्त्वप्रकाशिकायामानन्दमयाधिकरणे—कृत्यान्तराभावेऽपि तत्तु समन्वयादित्युक्तमेवोपक्रमाद्यन्वयात्सम्यङ्निरूपणं शास्त्रीयशब्दानां प्रतिवाक्यग्रहणेन प्रकटयत्यनेनाध्यायेन सूत्रकारः । अन्यथा प्रतिज्ञामात्रस्यासाधकत्वेनान्यदेव समन्वयादित्यपि वक्तुं शक्यत्वात्" इति ।

३ अध्यायशेष इति—प्रथमेत्यादिः ।

४ न संभवतीति—प्रतिबिम्बस्यैवोपास्यत्वेन तत्रैव गुणाद्यपेक्षणात् । तस्याब्रह्मत्वेन विष्णोश्च बिम्बस्यानुपास्यत्वेन त्वन्मते सृष्ट्यादिप्रतिपादकशास्त्रस्य वैयर्थ्यं दुष्परिहरमिति तात्पर्यार्थः ।

व्या०—त्तिनिमित्ततादधीन्येन तत्तदन्तर्यामिगतत्वेन च देवतान्तरविषयश्रुतिलिङ्गानां विष्णौ सावकाशत्वेन दौर्बल्यं तत्तदधिकरणेषु त्वयोपपादितं, देवतान्तरविषयश्रुतीनां विद्वद्रूढ्यादिभिर्विष्णौ परममुख्यतया प्राबल्यं प्रसिद्धार्थेष्वङ्गरूढ्या, केवलयोगेन प्रवृत्तिनिमित्ताश्रयत्वेन च मुख्यमात्रतया दौर्बल्यं च तत्तदधिकरणेषु त्वयोपपादितं, तथाऽपि न प्रबलं प्रबलमित्येव दुर्बलस्य बाधकं, दुर्बलस्यानुज्जीवनप्रसङ्गात्। किंतु सति विरोधे, न च त्वन्मते श्रुतिवाक्यानामनेकार्थत्वे विरोधोऽस्तीत्यसकृदावेदितं न विस्मर्तव्यम्। अपि च विद्वद्रूढ्यादयस्तावद्विष्णौ कुतो व्यवस्थिताः सिद्धाः, येन देवतान्तराविषयश्रुतिलिङ्गानां विष्णौ सावकाशत्वेन प्रसिद्धेषु स्वस्वार्थेषु परममुख्यत्वाभावेन च दौर्बल्यं भवेत्। विष्णुरेव जगत्कर्तृ परं ब्रह्मेति सापेक्षसावधारणनिश्चयाधीना हि तद्व्यवस्थितत्वासिद्धिः। अन्यथा विरिञ्च एव विद्वद्रूढ्यादय इति वक्तारं को वारयेत्।

तथा हि "आनन्दमयोऽभ्यासात्" (ब्र० सू० १।१।१२) इत्यधिक-

---

टि०— १ आनन्दमयोऽभ्यासादिति–अत्र तत्त्वप्रकाशिका–"अत्राऽऽनन्दमयो विषयः। स किं ब्रह्मादिजीवसमूह उत चेतनप्रकृतिः? अथाचेतना किंवा विष्णुः?। "ब्रह्माणि जीवाः। मम योनिर्महद्ब्रह्म। पञ्चभिः पञ्चभिर्ब्रह्म" इत्यादिना जीवादिषु ब्रह्मशब्दप्रयोगः संशयबीजम्। तत्र सयुक्तिकं पूर्वपक्षानाह...ब्रह्मशब्दादित्यादिना...। आनन्दमयमधिकृत्य "अस्ति ब्रह्मेति चेद्वेद" इति हिरण्यगर्भनिष्ठब्रह्मशब्दश्रवणात्तस्याऽऽनन्दमयत्वं युज्यते। ब्रह्मशब्दस्यान्यात्रापि वृत्तेः। रुद्रस्य वाऽऽनन्दमयत्वप्राप्तिः। "यश्चासावादित्ये" इत्यानन्दमयस्य सूर्ये प्रोक्तत्वाद्रुद्रस्य सूर्याद्यष्टप्रतिमत्वात्। एवमिन्द्रबृहस्पत्यादीनामपि सूर्याधिष्ठातृत्वादिनाऽऽनन्दमयत्वप्राप्तिः। आनन्दमयनिष्ठब्रह्मशब्दस्य "मम योनिर्महद्ब्रह्म" इति चित्प्रकृतौ प्रयोगात्। कथं सावकाशब्रह्मशब्देनायं निर्णय इति चेत्, "सोऽकामयत। बहु स्याम्" इत्यानन्दमयस्य बहुभावश्रवणात्। तदभिमानित्वाच्चित्प्रकृतेः। अचित्प्रकृतेर्वाऽऽनन्दमयत्वप्राप्तिर्बहुभावादेव। तत्तद्देहगतसर्वजीवानां वाऽऽनन्दमयत्वप्राप्तिः। बृह—जातिजीवकमलासनशब्दराशिष्विति धातोर्जीवेष्वपि ब्रह्मशब्दात्। न च वाच्यं "ब्रह्मशब्दस्य साधारण्यान्न निश्चायकत्वमिति। "अन्नरसमयः" "प्राणमयः" इत्युक्त्याऽन्नमयादीनामन्नादिविकाराभिमानित्वेन जीवत्वात्। तत्प्रायपठितानन्दमयेऽपि जीवानां प्राप्तेः। यद्यपि ब्रह्मशब्देन विष्णोरप्यस्ति प्राप्तिस्तथाऽपि नासावानन्दमयः। विष्णोरानन्दमयावयवत्वोक्तेः। तस्य चाऽऽनन्दमयत्वे तदवयवत्वविरोधात्। तथा चाऽऽनन्दमयस्याब्रह्मत्वेन तदवयवब्रह्मजिज्ञासा संभवतीत्याशयः। सिद्धान्तयति–तथाऽपीति। यद्यप्येवमन्येषां प्राप्तिस्तथाऽपीत्यर्थः। "असन्नेव स भवति। असद्ब्रह्मेति वेद चेत्। अस्ति ब्रह्मेति चेद्वेद"

व्या०—रणे जगत्कर्तृत्वादिना प्रतिपादितोऽन्नमयादिर्विष्णुरेवेति साध्ये ब्रह्मशब्दाभ्यासं हेतूकृत्य ब्रह्मशब्दस्य यद्यप्यन्यत्राप्यज्ञरूढिरस्ति, तथाऽपि तस्य विष्णौ "तदेव ब्रह्म परमं कवीनाम्" (ना० उ० १ । २) इतिश्रुत्योपदर्शितविद्वद्रूढिः प्रबलेति सैव निर्णयहेतुरिति त्वयोक्तम् । तत्र तदेव ब्रह्मेति श्रुतिर्विष्ण्वैकपरेति कुतोऽवसेया? "यमन्तःसमुद्रे कवयो वयन्ति" (ना० उ० १ । १) इति प्रसिद्धलिङ्गादिति चेत् । "प्रजापतिश्चरति गर्भे अन्तः" (ना० उ० १ । १) "हिरण्यगर्भ इत्यष्टौ" (ना० उ० १ । ३) इति प्रजापतिहिरण्यगर्भश्रुतिभ्यां विरिञ्चैकपरा सा कुतो नावसेया ? कुतश्च हिरण्यगर्भ इत्यष्टाविति गृहीता । "य ईशे अस्य द्विपदश्चतुष्पदः" इति पशुपतिलिङ्गात् । "पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि" इत्युपसंहाराच्च शिवैकपरा कथं नावसेया ? । तस्मादेतादृशविषयवाक्येषु नानादेवताश्रुतिलिङ्गानां बलाबलविवेचनेन व्यवस्थितैकदेवतापरत्वमन्यैर्व्यवस्थापनीयम् । त्वया तु सर्वश्रुतिलिङ्गानुग्रहलाभाय तावद्देवतापरत्वमेवाभ्युपगन्तव्यम् । श्रुत्यर्थानैकान्त्यवादिनस्तव तत्तद्देवताविषयश्रुतिलिङ्गानां मुख्यार्थमपि परिगृह्य सर्व-

टि०—इत्यानन्दमये ब्रह्मशब्दाभ्यासाद्विष्णुरेवाऽऽनन्दमयः । ब्रह्मशब्दस्य "तदेव ब्रह्म" इत्यादिश्रुतिस्मृतिषु विष्ण्वेकनिष्ठत्वोक्तेः । न च तत एव हिरण्यगर्भादीनां प्राप्तिः शङ्क्या । तेषामपूर्णत्वेन ब्रह्मशब्दमुख्यार्थत्वाभावस्याप्युदाहृतश्रुत्यादिसिद्धत्वात् । मुख्यार्थत्यागेनामुख्यार्थग्रहणायोगात्" इति । अत्र पूर्वपक्षो न समीचीनः । आनन्दमयशब्दस्योक्तेष्वर्थेषु प्रसिद्ध्यभावात् । ब्रह्मशब्दस्य रूढ्यैव प्रवृत्त्यभ्युपगमात् । योगेन गुणपूर्णत्वस्य विष्णोरन्यत्रासंभवेनाप्रवृत्त्या जन्माद्यधिकरणेन गतार्थत्वात् । तथा हि जन्माद्यधिकरणे तत्त्वप्रकाशिकायाम्—सृष्ट्याद्यष्टकमस्य जगतो यतो भवति तदेव ब्रह्म जिज्ञास्यमुच्यते । तल्लक्षणं च विष्णावेव संभवति न जीवे । अतो ब्रह्मशब्दस्य जीवे रूढत्वेऽपि बाधकसद्भावात्तद्ब्रह्मेति श्रुत्युक्तं ब्रह्म विष्णुरेवेति युक्तैव प्रागुक्तजिज्ञासेत्यर्थः । यद्यपि विष्णौ ब्रह्मशब्दो विद्वद्रूढियुक्तस्तथाऽप्यभ्युपगम्योक्तिरियमिति ज्ञातव्यमिति । "अस्ति ब्रह्म" इत्यादीनां पुच्छब्रह्मविषयकत्वात् । "सोऽकामयत" इत्यादिश्रुत्युक्तजगत्कारणत्वस्य ब्रह्मणोऽन्यत्रासंभवस्य निरूपणाच्च । ततश्च पूर्वपक्षो निर्दलः । एवं सिद्धान्तोऽपि । गुणपूर्णत्वस्य ब्रह्मणोऽन्यत्रासंभवस्य जिज्ञासाधिकरणे निरूपणात् । ब्रह्मशब्दाभ्यासस्याद्यापि विष्णावनिर्णयेन हेतोरसिद्धेश्चेति दूषणजाले जाग्रत्येव दूषणान्तरमाह—तदेवेति । तत्र विष्णुवाचकपदाभावादिति शेषः ।

व्या०—विषयत्वाङ्गीकारसंभवे किंचिदनुरोधेन कस्यचित्प्रसिद्धार्थस्य परित्यागायोगात् ।

ननु तथा सति तत्तद्विषयवाक्यगतब्रह्मशब्दानामप्यनेकार्थत्वस्य वक्तव्यतया "तदेव ब्रह्म परमं कवीनाम्" ( ना० उ० १ । २ ) इत्यवधारणं न घटेतेति चेत् । न । तस्य त्वन्मते भूमशब्दरीत्या पुरुषभेदेन व्यवस्थितार्थबोधकत्वसंभवात् । ननु कथमिह प्रजापतिरपि ब्रह्मशब्दार्थः स्यात् । 'ते ये शतं प्रजापतेरानन्दाः । स एको ब्रह्मण आनन्दः" ( तै० उ० २ । ८ ) इति ब्रह्मप्रजापत्योरानन्दोत्कर्षापकर्षश्रवणादिति चेन्न । "ब्रह्मपुच्छं प्रतिष्ठा" इति ब्रह्मानन्दमययोरवयवावयवित्वश्रवणेऽप्यानन्दमयस्यैव प्रजापतेरपि ब्रह्मत्वोपपत्तेः। त्वया ब्रह्मानन्द एव तारतम्यवदनन्तविशेषवत्त्वस्याङ्गीकृतत्वेनैकस्मिन्नुत्कृष्टापकृष्टानन्दवत्त्वं न संभवतीति वक्तुमशक्यत्वाच्च । "अन्योऽन्तर आत्मा प्राणमयः" इत्यादिसाक्षाद्भेदश्रवणमविगणय्यान्नमयादीनामभेदमङ्गीकृतवतस्तव भेदकश्रवणस्यात्यन्तमविगणनीयत्वाच्च । एतेनाग्निमाधिकरणविषयवाक्येष्वपि तत्तत्प्रतिपाद्यत्वेन पूर्वपक्ष्यभिमतदेवताभ्यो भेदव्यपदेशेन भेदकव्यपदेशेन वा तस्य तस्य विषयवाक्यस्य तत्तद्देवतापरत्वानिराकरणमपि प्रत्याख्यातम् । त्वन्मतेऽन्नमयादिष्विव ब्रह्मानन्दमययोरिव च भेदभेदकव्यपदेशयोरुपपन्नतया तत्तद्देवताविषयसुप्रसिद्धश्रुतिलिङ्गादिस्वारस्यानुरोधेन तस्य तस्य विषयवाक्यस्य पूर्वपक्ष्यभिमततत्तद्देवतापरत्वस्याप्यनिवार्यत्वात् । अन्यश्चायमग्निमाधिकरणानां विष्णावेव तत्तद्विषयवाक्यसमन्वयस्यार्थस्य व्यवस्थापकानां निराकरणसंक्षेपः । प्रायः सर्वेष्वधिकरणेषु साधारणेन ब्रह्मश्रुतिलिङ्गादिना विष्णुपरत्वनिर्णयः । पूर्वपक्ष्यभिमततत्तद्देवताविशेषश्रुतिलिङ्गानां प्रवृत्तिनिमित्ततादधीन्यादिभिः सावकाशत्वेन निराकरणमिति च दृश्यते । यथा—आकाशस्तल्लिङ्गात्" ( ब्र० सू० १ ।

---

टि०— १ परित्यागायोगादिति—त्यागे च कर्मकाण्डस्य कर्मबोधकत्वासिद्ध्या विष्णूद्देशेनानुष्ठेयकर्मबोधकप्रमाणासंभव इत्यर्थः ।

२ आकाशस्तल्लिङ्गात्—उक्तं च तत्त्वप्रकाशिकायां—स चाऽऽकाशोऽत्र विषयः। विष्णुरन्यो वेति संदेहः । आकाशशब्दस्याऽऽनन्दमये प्रयुक्तत्वमन्यत्र प्रसिद्धिश्च संदेहबीजम् । भूताकाश एवायमिति पूर्वः पक्षः । आकाशशब्दस्य तत्र रूढत्वात् । न च वाच्यं योगवृत्त्याऽऽकाशशब्दो विष्णौ सावकाश इति । बाधकं विनाऽमुख्यार्थाङ्गीकारायोगात् । नचाऽऽकाशस्य भगवदधीनत्वेन तत्रैवाऽऽकाशशब्दो मुख्य इति युक्तम् । आकाशस्याचेतनत्वेनान्याधीनत्वायोगात् । चेतनस्य हि चेष्टादावन्याधीनत्वं संभवतीति । आकाशस्याचे-

व्या०—१ । २२) इत्यधिकरणे "अस्य लोकस्य का गतिरितिः' 'आकाश इति होवाच" ( छा० १ । ९ । १ ) इत्यादिविषयवाक्यस्य "स एष परोवरीयानुद्गीथः । स एषोऽनन्तः" ( छा० १ । ९ । २ ) इत्यादिवाक्यश्रुतपरोवरीयस्त्वादिसाधारणब्रह्मलिङ्गेन विष्णुपरत्वनिर्णयः । आकाशश्रुतेस्तत्प्रवृत्तिनिमित्ततादधीन्यादिना विष्णुवाचकत्वसंभवेन सावकाशतया निराकरणं च ।

तथा "ज्योतिश्चरणाभिधानात्" ( ब्र० सू० १ । १ । २४ ) इत्यधिकरणे

---

टि०—तनत्वेनाऽऽनन्दानुपपत्तावप्यभिमानिद्वारा तदुपपत्तेरिति भावः। अनेनैवाऽऽकाशशब्दस्याऽऽनन्दमये प्रयुक्तत्वाद्विष्णुराकाशः किं न स्यादिति परास्तम् । रूढेर्बलवत्त्वेन तस्यापि बाधोपपत्तेः । सिद्धान्तयति—इतीति । यद्यपि " अस्य लोकस्य का गतिरिति वाक्ये भूताकाशस्योक्तरीत्याऽस्ति प्रतिपाद्यत्वप्राप्तिस्तथाऽपि नासावत्र वाच्यो युज्यते । अपि तु विष्णुरेव युज्यते । परोवरीयस्त्वादिविष्णुलिङ्गस्याऽऽकाशनिष्ठतया श्रवणात् " इति । अत्रापि पूर्वपक्षो न समीचीनः । रूढ्यपेक्षया विष्णौ योगप्राबल्यस्य जन्माद्याधिकरणे निर्णयात् । न च तत्र जगत्कारणत्वरूपबाधकसत्त्वाद्रूढ्यर्थत्याग इति वाच्यम् । अत्रापि तादृशकारणत्वरूपबाधकसत्त्वात् । " आकाशादेव समुत्पद्यन्ते " इति श्रवणात् । चेतनाचेतनात्मकप्रपञ्चस्य ब्रह्माधीनत्वेन चेतनस्यैवान्याधीनत्वोक्तेर्मोहमूलत्वात । अचेतनरथादिचेष्टाया एव चेतनाधीनत्वावगमाच्च । अपि च सिद्धान्तोऽप्यनुपादेयः । परोवरीयस्त्वस्याद्यापि विष्णावनिर्णयात् । निर्णये चाधिकरणानुत्थितेः । वेदानामनेकार्थपरत्वस्य तृतीयचतुर्थयोरधिकरणयोर्दीक्षितेन्द्रैर्व्यवस्थापनेन लिङ्गस्याऽऽकाशश्रुतिवश्चकत्वासंभवाच्च । तस्मात्परकीयमाकाशाधिकरणं निरालम्बनामिति हृदयम् ।

१ ज्योतिश्चरणेति—तथा हि तत्त्वप्रकाशिकायां—ज्योतिरत्र विषयः । किं विष्णुरुताग्निरिति संदेहः । गुहानिहितत्वं ज्योतिःशब्दस्याग्नौ प्रसिद्धिश्च संदेहबीजम् । तज्ज्योतिरग्निरेव भवेत् । एतत्सूक्तस्याग्निसूक्तत्वात् । ज्योतिःश्रुतेरग्नावेव रूढत्वात् । तथा च सावकाशलिङ्गमात्रात्सावकाशश्रुतिप्रकरणयोर्बलवत्त्वादग्निरेवेदं ज्योतिः । ततश्च गुहानिहितत्वमानन्दमयत्वं च तस्यैवेति पूर्वपक्षः । सिद्धान्तस्तु—विष्णुरेवेदं ज्योतिर्भवेत् । कर्णादीनामेतज्ज्योतिर्विरुद्धचरणाभिधानात् । कर्णादिविदूरत्वादिलिङ्गादित्यर्थः । न च प्रकरणबाधः । लिङ्गेन प्रकरणबाधोपपत्तेः । न च श्रुतिविरोधः । श्रुतेर्विष्णौ सावकाशत्वात् । महायोगविद्रूढिसद्भावेन मुख्यत्वाच्च । निरवकाशलिङ्गेन सावकाशश्रुत्यादेर्बाधोपपत्तेः । अतो विष्णुरेवेदं ज्योतिरिति " । अत्र पूर्वपक्षस्यैवानाञ्जस्यात् । प्रकरणाद्बलीयसो लिङ्गस्य गुहानिहितत्वस्य दर्शनात् । न च लिङ्गस्य ज्योतिःश्रुतिर्बाधिकेति वाच्यम् । श्रुतेरप्यनन्य-

व्या०—"विमे कर्णा पतयतो विचक्षुर्वी३दं ज्योतिर्हृदय आहितं यत्" इति मन्त्रस्य ( ऋ० सं० ४ । ५ । ११ । ६ ) कर्णादिविरुद्धाचरणेन कर्णाद्यपरिच्छेद्य-वैभवरूपेण साधारणेन ब्रह्मलिङ्गेन विष्णुपरत्वानिर्णयस्तत्तन्मन्त्रगतज्योतिःश्रुते-र्ज्योतिःप्रकरणसंपादकतत्पूर्वापरमन्त्रगताग्न्यादिश्रुतीनां च पूर्ववद्विष्णौ सावका-शतया निराकरणं च ।

" छन्दोभिधानात् " ( ब्र० सू० १ । १ । २५ ) इत्यधिकरणे " गायत्री

---

टि०—थासिद्धलिङ्गेन बाधस्याऽऽकाशाधिकरणे व्यवस्थापितत्वात् । न च परोवरीयस्त्वलिङ्गस्य श्रुतिबाधकत्वं तत्रोक्तम् । न तु गुहानिहितत्वलिङ्गस्येति वाच्यम् । न्यायस्य तुल्यत्वात् । अन्यथा श्रुतिकल्पकस्य तव स्वेष्टसिद्ध्यर्थं शास्त्रान्तरकल्पनाप्रसङ्गात् । तथा सिद्धा-न्तोऽपि न समीचीनपद्धतिमध्यास्ते । कर्णाविदूरत्वलिङ्गस्य शिवसाधारणत्वात् । तदनि-राकरणेन न्यूनत्वात् । " प्राणो वा आशाया भूयान् " ( छा० ७ । १५ । १ ) इति प्रकरणे प्राणपदस्य मुख्यप्राणपरत्वं विष्णुपरत्वं च व्यवस्थापितम् । उक्तं हि भूमाधिक-रणतत्त्वप्रकाशिकायाम्—न चैतदर्थद्वयं विरुद्धम् । अन्तर्यामिविवक्षया प्राणपदेन विष्णो-रुक्तेः । " आत्मन आकाशः संभूतः " इत्यादिवदिति । ततश्च तद्वदेव ज्योतिःशब्द-स्याग्निपरत्वेऽपि न व्याहतिरिति वृथा तन्निराकरणार्थमधिकरणरचनेति दिक् ॥

१ छन्दोभिधानादिति—अत्र तत्त्वप्रकाशिकायामेवमधिकरणशरीरं वर्णितम्—सा गायत्री विषयः । किं विष्णुरुत छन्दोविशेष इति संदेहः । ज्योतिःश्रुतिर्लोकप्रसिद्धिश्च संदेह-बीजम् । तत्र गायत्री छन्दोविशेष एवेति पूर्वपक्षः । गायत्रीशब्दस्य तत्रैव रूढत्वात् । वाग्वै गायत्रीति वाक्त्वविधानाच्च । न च गायत्रीश्रुतिर्विष्णाववकाशवती । रूढेरभावात् । योगस्य चामुख्यवृत्तित्वात् । सिद्धान्तस्तु—अत्र गायत्रीशब्देन विष्णुरेव निगद्यते । एत-द्गायत्र्या गानत्राणकर्तृत्वलिङ्गश्रवणात्तस्य च छन्दस्यसंभवाद् विष्णुरेव गायत्री । न च गायत्रीश्रुतेरन्यत्र निरूढत्वात्कथं लिङ्गमात्रेण विष्णुत्वनिश्चय इति वाच्यम् । गायत्रीश्रुतेः पौराणिकरूढ्या श्रुत्युक्तयोगेन गायत्र्या भगवदधीनत्वेन च विष्णावेव मुख्यवृत्त्या साव-काशत्वात् । लिङ्गस्यामुख्यवृत्त्याऽप्यन्यत्रानवकाशात् । सावकाशश्रुतेर्निरवकाशलिङ्गेन बाधोपपत्तेर्युक्तो लिङ्गमात्रेणायं निर्णय इति । अत्र पूर्वपक्षो न न्यायपथमवतरति । ज्योति-रधिकरणे ज्योतिःश्रुतेर्विष्णुपरत्वनिर्णयेन तया गायत्रीश्रुतिबाधात् । न च श्रुतेः श्रुतिबा-धकत्वासंभवः । निर्णीतयाऽनिर्णीतस्य बाधात् । न चोपक्रमस्थगायत्रीश्रुतिः प्रबलेति वाच्यम् । तव मते ब्रह्मतर्कवशादुपसंहारस्य प्राबल्यात् । तेजो वै घृतमितिवत्तेजो वै गायत्रीत्यस्योपपत्तेः । गानत्राणकर्तृत्वेन विष्णावेव योगरूढ्या गायत्रीशब्दप्रवृत्तेः । केव-लरूढ्यपेक्षया योगरूढेः प्राबल्यात् । सिद्धान्तोऽपि न समीचीनः । अग्निगायत्र्यादिश्रु-

व्या०—वा इदꣳ सर्वं भूतम् ” ( छा० ३ । १२ । १ ) इत्यादिविषयवाक्यगतस्य गायत्रीशब्दस्य गानत्राणकर्तृत्वादिसाधारणब्रह्मलिङ्गादिभिर्विष्णुपरत्वानिर्णयः । गायत्रीश्रुतेः पूर्ववद्विष्णौ सावकाशतया निराकरणं च ।

प्राणस्तथाऽनुगमात् ( ब्र० सू० १ । १ । २८ ) इत्यधिकरणे “ ता वा एता शीर्षन् श्रियः श्रिताः चक्षुः श्रोत्रं मनो वाक्प्राणः ” ( ऐ० ब्रा० ) इत्याद्यैतरेयब्राह्मणे श्रुतस्य प्राणशब्दस्य “ तं देवाः प्राणयन्तः ” तं भूरिति देवा उपासांचक्रिरे ” इत्यादिवाक्यश्रुतदेवोपास्यत्वादिसाधारणब्रह्मलिङ्गैर्विष्णुपरत्वनिर्णयः । तत्र च यन्मुख्यप्राणलिङ्गं “ ता अहिंसन्ताहमुक्थमस्मि अहमुक्थमस्मीति ” ( ) प्राण उपक्रमा(उपक्रा) मत् ”

टि०—ब्दानां विष्णोरन्यत्र रूढानां विष्णुपरत्वे प्रमाणाभावात् । गानत्राणकर्तृत्वरूपप्रवृत्तिनिमित्ततादधीन्यस्य ऋच्येव संभवात् । विष्णावसंभवाच्च । प्रभ्वधीनसेवकधर्मस्य सेवकमात्रनिष्ठत्वेन प्रभ्वधीनत्वाभावात् । दीपगतप्रकाशादेस्तैलाधीनत्वेऽपि तैलादौ दीपपदवाच्यत्वादर्शनाच्च । सर्वशब्दाभिधो ह्येषः सर्वदेवाभिधो ह्यसौ । सर्वलोकाभिधो ह्येषस्तेषां तदुपचारतः । इति पौराणिकरूढेरपि शिवपरत्वेनासाधकत्वाच्च । अतश्छन्दोभिधानाधिकरणरचनाऽतीव हेया ।

१ प्राणस्तथाऽनुगमादिति—उक्तं हि तत्त्वप्रकाशिकायां–प्राणोऽत्र विषयः । किं विष्णुरुतान्य इति संदेहः । पूर्वोक्तन्यायोऽन्यत्र प्रसिद्धिश्च संदेहबीजम् । तत्र न प्राणो विष्णुः, किंतु वाय्वादिरेवेति पूर्वपक्षः । एतत्प्राणस्येन्द्रियगणे गणितत्वात् । न चैतल्लिङ्गं विष्णाववकाशं लभते । उपपद्यते च मुख्यप्राणादिषु । अतस्तेषामन्यतमस्यैतत्प्राणत्वादिति । सिद्धान्तस्तु—“ तद्वै त्वं प्राण इति श्रुताविवात्रापि श्रुतः प्राणो विष्णुरेव । विष्णुलिङ्गानां देवतोपदेश्यत्वादीनामस्मिन्प्राणेऽनुगमात् । अनुवृत्तेरभ्यासादित्यर्थः ” इति । अत्र संदेहो निर्बीजः । उक्तन्यायलोकप्रसिद्ध्योरतुल्यबलत्वात् । तथा पूर्वपक्षोऽसारः । इन्द्रियगणे गणितस्य करणत्वेन वाय्वादिरूपत्वाभावात् । “ न वायुक्रिये पृथगुपदेशात् ” ( ब्र० सू० २ । ४ । १० ) इति सूत्रविरोधाच्च । सिद्धान्तोऽसारतरः । “ ईशानः सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माऽधिपतिर्ब्रह्मणोऽधिपतिः ” ( ना० उ० २ । १ ) इति श्रुत्या देवतोपदेश्यत्वस्य शिवेऽपि संभवात् । विष्णावेवेति नियमाभावाच्च । “ विष्णुमेवानयन्देवाः ” इति स्कान्दवचनस्य पौर्वापर्यालोचनायां व्यापकशिवपरत्वात् । भवन्मते प्राणपदस्य ज्योतिरधिकरणन्यायेनानेकपरत्वसंभवाच्च । अनेनाधिकरणेन प्राणपदस्य वायुपरत्वनिषेधे “ न वायुक्रिये पृथगुपदेशात् ” ( ब्र० सू० २ । ४ । १० ) इत्यधिकरणेन पौनरुक्त्याच्चेति यत्किंचिदेतत् ।

व्या०—इत्यादौ श्रुतविषयमिन्द्रियैः सह कलहमुत्क्रमणं प्रवेशनमित्यादि। यच्च तत्र "त्वामेव विजानीयाम्" इति पृष्टवन्तं विश्वामित्रं प्रति "प्राणो वा अहमस्मीति" इन्द्रवचनं, तत्सर्वान्तर्यामिविषयतया सावकाशमिति निराकरणं च। एवं द्वितीयपादाद्यधिकरणेष्वपि तत्तद्विषयवाक्यानां साधारणब्रह्म-

टि०— १ द्वितीयपादादीति–तथा हि "सर्वत्र प्रसिद्धोपदेशात्" (ब्र० सू० १।२।१) अत्र मध्वभाष्यम्–"ब्रह्म ततम्" इति सर्वगतत्वमुक्तं विष्णोः। तच्च "तस्यैतस्यासावादित्यो रसः" इत्यादिनाऽऽदित्यस्य प्रतीयते। अतोऽब्रवीत्–"स यश्चायमशरीरः प्रज्ञात्मा" इत्यादिना सर्वत्रोच्यमानो नारायण एव। "तदेव ब्रह्म परमं कवीनाम्" परमं यो महद्ब्रह्म "वासुदेवात्परः को नु ब्रह्मशब्दोदितो भवेत्" स हि सर्वगुणैः पूर्णस्तदन्ये तूपचारतः इति तस्मिन्नेव प्रसिद्धब्रह्मोपदेशादिति। तत्र हि तत्त्वप्रकाशिकायाम्–तत्सर्वगतत्वं विषयः। विष्णोरन्यस्य वेति संदेहः। "ब्रह्म ततम्" इत्युक्तिरादित्यश्रुतिश्च संदेहबीजम्। एवं सति पूर्वपक्षः। तत्सर्वगतत्वमादित्यस्यैव भवेत्। "तस्मात्पुरुषं पुरुषं प्रत्यादित्यो भवति" इत्यादिबह्वादित्यश्रुतेः। "सूर्य आत्मा जगतः" इति सौरमन्त्रोदाहरणाच्च। अत एव न श्रुतेरन्तर्यामिविषयत्वं युज्यते। तस्यापरिच्छिन्नत्वेन सर्वेषु भूतेष्वित्युक्काल्पौकस्त्वायोगाच्च। अतो विष्ण्वन्यस्यैव सर्वगतत्वादन्यस्यैव प्राणत्वानन्दमयत्वादिरिति। सिद्धान्तस्तु–स यश्चायमित्यादिवाक्येन पृथिव्यादिषूच्यमानो नारायण एव। "एतमेव ब्रह्मेत्याचक्षते" इति सर्वगते ब्रह्मशब्दोपदेशात्। ब्रह्मशब्दस्य श्रुतौ नारायण एव प्रसिद्धत्वादित्यर्थः। तथा च श्रुतिः–"यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" (ना० उ० १३) इति। अत्र स यश्चायमितिवाक्योदाहरणं पूर्वं विषयवाक्यस्यानुदाहृतत्वात्कृत्रिमशरीरत्वयुक्तिसूचनार्थं च। न हि नारायणेतरचेतनानां स्वतोऽशरीरता संभवतीति। अत्राधिकरणाङ्गसंदेह एव नावतरति। आदित्यश्रुतिसर्वगतत्वलिङ्गयोरतुल्यबलत्वात्। न च ब्रह्मश्रुतिरेवैककोट्युत्थापकः। भवन्मते ब्रह्मशब्दस्य प्राबल्यमानन्दमयाधिकरणे व्यवस्थापितमिति द्वितीयकोट्यनुत्थानप्रसङ्गात् पूर्वपक्षोऽपि न समुन्मिषति। उक्तश्रुतीनामन्तर्यामिपरत्वात्। सर्वभूमण्डलाधिपतेरपि रघुनाथस्यायोध्याधिपतित्वमिव सर्वव्यापिनोऽपि तस्याल्पौकस्त्वव्यवहारोपपत्तेः। सिद्धान्तोऽपि न विदुषां चमत्कारमावहति। सर्वत्रोच्यमानत्वस्य शिवसाधारणत्वेन ब्रह्मशब्दस्य योगमर्यादयाऽन्यत्रापि संभवात्। ब्रह्मशब्दरूढेर्विष्णावव्याप्यनिर्णयात्। यच्च किंचेति श्रुतेः। "पतिं विश्वस्याऽऽत्मेश्वरꣳ शाश्वतꣳ शिवमच्युतम्" (ना० उ० १३) इति पूर्वानुसारेण नारायणपदस्य सर्वाधिष्ठानत्ववाचकतया मायाशबलितेश्वरपरत्वात्त्रिमूर्त्यन्तर्गतविष्णुपरत्वाभावादिति।

व्या०–लिङ्गादिभिर्विष्णुपरत्वनिर्णयः । अन्यविषयश्रुतिलिङ्गानां सावकाशतया निराकरणमित्येतदेव प्रायिकम् । अत्र सर्वत्रापि साधारणब्रह्मशब्दलिङ्गानां विष्ण्वेकविषयत्वमन्यविषयश्रुतिलिङ्गानां प्रवृत्तिनिमित्ततादधीन्यादिभिर्विष्णवावेव सावकाशत्वमित्येतदप्यद्याप्यसिद्धम् । शिवादिविषयत्वमपि संभवतीति शङ्का-ग्रस्तत्वात् । तन्निराकरणार्थमेव त्वया प्रथमाध्यायशेषस्य प्रारब्धव्यत्वात् । तथा चोपक्रान्तसाधनीयार्थविस्मरणेन सर्वत्र तस्यैव हेतूकरणमत्यन्तमयुक्तमिति स्पष्टमेव ।

द्वित्रेष्वधिकरणेषु त्वया विष्णवसाधारणश्रुतिलिङ्गानि सन्तीति लिखित्वा तैर्निर्णयः कृतोऽपि दृश्यते । यथा "अन्तस्तद्धर्मोपदेशात्" (ब्र० सू० १ । १ । २०) इत्यधिकरणे "अन्तःप्रविष्टं कर्तारमेतम् । अन्तश्चन्द्र-मासि मनसा चरन्तम् । सहैव सन्तं न विजानन्ति देवाः । इन्द्रस्याऽऽत्मानं

टि०– एवमत्राधिकरणे (ब्र० सू० १ । २ । ९) भवदीये तत्त्वप्रकाशिका–तदत्तृत्वं विषयः । किं विष्णोरन्यस्य वेति संदेहः । लक्षणसूत्रमादितिश्रुतिश्च संदेहबीजम् । अदिते-रेवेति पूर्वपक्षः । तददितेरित्यादिश्रुतेः । न च श्रुतिर्विष्णुविषया किं न स्यादुक्तन्यायादिति वाच्यम् । अदितित्वलिङ्गात् । नह्यदितिभिन्नस्यादितित्वं संभवति । अतो न प्रागुक्तं ब्रह्मल-क्षणं युक्तम् । सिद्धान्तस्तु–विष्णुरेवात्रात्तोच्यते । "सर्वं वा अत्तीति" चराचरस्याद्यतया ग्रहणादिति । अत्र विशय एव नोदेतुमर्हति । सूत्रस्य स्मृतिरूपत्वेन श्रुतिस्मृत्योरतुल्यबल-त्वाभावात् । पूर्वपक्षोऽपि न संभवति । अत्तृत्वस्यानन्यथासिद्धब्रह्मलिङ्गत्वेन तेन श्रुतिबाधस्य पूर्वमेव गतत्वात् । अदितित्वस्यादितिनिष्ठस्यापि ब्रह्माधीनत्वेनादितिवाचकपदस्य ब्रह्मण्यपि वृत्तेः । सिद्धान्तोऽपि न संभवद्युक्तिकः । सर्वसंहर्तृत्वस्य कालरुद्रधर्मत्वेन विष्णवसाधारण-त्वाभावात् । "स्रष्टा पाता तथैवात्ता निखिलस्यैक एव तु । वासुदेवः परः पुंसामितरेऽल्पस्य वा न वा" इतिस्कान्दवचनादसाधारण्यमिति न भ्रमितव्यम् । तद्वचनस्य सर्वकल्पनाधिष्ठानवा-सुपदार्थमायाशबलब्रह्मपरत्वात् । तस्य–वसतीति वासुः । दीव्यतीति देवः । इति व्युत्पत्तेर्वासु-देवपदार्थत्वात् । अत्र भवद्भाष्यकर्तुः–"यमप्येति भुवनꣳ सांपराये स नो हरिर्घृतमिहायु-षेऽत्तु देवः" इति घृतसूक्तमन्त्रे हविःशब्दस्थाने हरिशब्दं प्रक्षिप्य स्वापेक्षितार्थकल्पनायाः समस्तवेदकल्पकस्यातिशोभायमानत्वात् । एवं शास्त्रस्य शिवपरत्वनिराकरणार्थमध्याय-शेषप्रवृत्तिमङ्गीकृत्य तदकरणेन शिवसाधारणलिङ्गप्रदर्शनेन च प्रक्रान्तविस्मृतिस्तव सम्यङ्ङ मूर्धानमारुरोहेति भावः ।

१ तस्यैवेति––शब्दलिङ्गादेरिति शेषः । अयुक्तमिति–हेतोः पक्षधर्मत्वानिश्चयेन स्वरूपासिद्ध्यादिदोषप्रसङ्गादिति भावः ।

व्या०—शतधा चरन्तम् ” ( तै० आ० ३।११।९ ) इत्यादिमन्त्रगतस्यान्तःप्रविष्टशब्दस्य विष्णुपरत्वे “ अन्तः समुद्रे मनसा चरन्तम् ” ( तै० आ० ३ । ११ । ९ ) “ यस्याण्डकोशः शुष्ममाहुः प्राणमुल्बम् ” ( तै० आ० ३ । ११ । ४ ) इति समुद्रशायित्वब्रह्माण्डवीर्यत्वरूपं विष्णुलिङ्गमस्तीति । यथा च “ अत एव प्राणः ” ( ब्र० सू० १ । १ । २३ ) इत्यधिकरणे “ तद्वै त्वं प्राणो अभवः । महान् भोगः प्रजापतेः । भुजः करिष्यमाणः । यद्देवान् प्राणयो नव ” ( तै० आ० ३ । १४ । ३ ) इति प्राणशब्दस्य विष्णुपरत्वे “ ह्रीश्च ते लक्ष्मीश्च पत्न्यौ ” ( तै० आ० ३ । १३ । २ ) इति तत्पूर्वानुवाकश्रुतं लक्ष्मीपतित्वलिङ्गमस्तीति । यथा च “ शब्दादेव प्रमितः ” ( ब्र० सू० १ । ३ । २४ ) इत्यधिकरणे “ अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य स एवाऽद्य स उ श्वः ( क० ४ । १२ ) इति श्रुतस्याङ्गुष्ठमात्रशब्दस्य विष्णुपरत्वे “ ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति । मध्ये वामनमासीनं विश्वे देवा उपासते ” ( क० उ० ५ । ३ ) इतिमन्त्रश्रुतवामनश्रुतिरस्तीति ।

अत्र समुद्रशायित्वादिविष्णुलिङ्गप्रतिद्वंद्वि “ अन्तश्चन्द्रमसि मनसा चरन्तम् ” (तै० आ० ३ । ११ । ५) “ अन्तरादित्ये मनसा चरन्तम् ” ( तै० आ० ३ । ११ । ६ ) इत्यष्टमूर्तेः शिवस्यापि लिङ्गमस्तीति, लक्ष्मीपतिविष्णुपरत्वलिङ्गपरिपन्थिनी “ प्रजापतिश्चरति गर्भे अन्तः ” ( ना० १ । १ ) इति प्रजापतिरस्तीति वामनश्रुतिप्रतिपक्षभूता, ईशानश्रुतिरस्तीति कुत उदाहृतश्रुतिलिङ्गैर्विष्ण्वेकपरत्वनिर्णयः । श्रुत्यर्थानैकान्त्यवादिनस्तव मते विष्णुपरत्वेन योजनायां शिवादिश्रुतिलिङ्गनामन्यथानयनवच्छिवादिपरत्वेन योजनायां विष्णुश्रुतिलिङ्गनामन्यथानयनसंभवात् । न च कठमन्त्रे—ईशानशब्दो भूतभव्यस्येतिपदसमभिव्याहाराद्भूतभव्यप्रतियोगिकेशितृपरो न तु शिवे रूढिमानिति वाच्यम् । तथा सति वामनशब्दोऽपि प्राणापानमध्यस्थतोक्त्या पूर्वापरमन्त्रेषु बहुधाऽङ्गुष्ठमात्रतोक्त्या च ह्रस्वत्वपरो न तु विष्णौ रूढिमानिति त्वदभिमतश्रुतेरपि हानिप्रसङ्गात् । यथा चेशानशब्दः शिवे रूढिमानेव, एवं यथा च समुद्रशायित्वब्रह्माण्डवीर्यत्वलक्ष्मीपतित्वानि विष्णुलिङ्गानि न भवन्ति तथा

टि०— १–श्रुत्यर्थानैकान्त्यवादिन इति–तथा च विनिगमनाविरहेण शास्त्रस्य विष्णुपरत्वमेवेति वर्षशतेनापि निरूपयितुमशक्यत्वात्प्रयासस्तव वृथेति भावः ।

व्या०—समर्थितं चास्माभिः शिवतत्त्वविवेके ( शि० वि० श्लो० १८।२१।२४।

टि०— १ शिवतत्त्वविवेक इति–तत्र हि यत्तु शिवेशानादिशब्दानां शिवेऽसाधारण्यं नास्तीत्युक्तं, तत्र पृच्छामः–किं तेषां " पन्थानः सन्तु ते शिवाः " इत्यादिप्रयोगविषयसाधारणशुभतादिरूढिव्यतिरेकेण शिवेऽसाधारणरूपेण शक्तिरेव नास्तीत्युच्यते, उत तत्सत्त्वेऽप्यक्षादिशब्दवदनेकशक्तिकत्वात्स्वतो न निर्णायकत्वमिति । नाऽऽद्यः । शिवः शूली महेश्वरः । ईशानः शशिशेखरः । इत्याद्यनुशासनबलात् । " विष्णुर्नारायणः कृष्णः " इत्याद्यनुशासनबलात् । कृष्णशब्दस्य वर्णविशेषे रूढिव्यतिरेकेण विष्णाविव तेषां तत्र शक्तेरवश्यमभ्युपगन्तव्यत्वात् । अन्यथा पथ्यादिवदेव तत्र पृथगनुशासनानपेक्षणेन तद्वैयर्थ्यापत्तेः । नापि द्वितीयः । केवलयोगेन कुमुदादिषु प्रयुज्यमानस्यापि पङ्कजादिपदस्य योगरूढ्युभयांनुग्रहलाभेन पद्मपरत्वस्येव शिवेशानादिशब्दानां शुभत्वसर्वेश्वरत्वादिविशिष्टरूपविषयशक्तिद्वयानुग्रहलाभेन परमेश्वरपरत्वस्यौत्सर्गिकतया प्रकरणोपपदाद्यनुपपीडितात्ततः सर्वत्र परमेश्वरत्वप्रतीतेः स्वत एव तेषां निर्णायकत्वात् । एतेन योगेनान्यत्रापि प्रयुज्यमानानामीश्वरमहेश्वरेशानादिशब्दानामप्यसाधारण्यं व्याख्यातम् । " ईशानशब्दस्य त्वसाधारण्यम् । " शब्दादेव प्रमितः " ( ब्र० सू० १ । ३ ) इति सूत्रे भगवता बादरायणेनैव स्फुटीकृतत्वाच्च । "महेश्वरस्त्र्यम्बक एव नापरः" "यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः' इति । तथा–ईशानेश्वरेतिशब्दाः कथंचिद्योगमात्रेणान्यत्रापि प्रयुज्यमाना योगरूढ्या शिवासाधरणाः । स्फुटप्रयोगप्रख्यापनात् ।

" यस्मादीशो महतामीश्वराणां भवानाद्यः प्रीतिदः प्राणदश्च ।
तस्माद्धि त्वामीश्वरं प्राहुरीशं सन्तो नित्यं सर्वशास्त्रार्थविज्ञाः ॥

इत्यादिहरिवंशादिवचनदर्शनाच्च । अपि च शिवे प्रयुज्यमानाः पदान्तरसमभिव्याहारमनपेक्ष्य स्वयमेव रूढ्या शिवमुपस्थाप्य श्रुतिविधया तत्रावयवार्थमैश्वर्यं प्रतिपादयन्तीति निखिलविनियोजकप्रमाणमूर्धन्यानेकश्रुतिबलान्निरतिशयैश्वर्यविश्रान्तिः शिव एवेति सिध्यतीत्यादिमहता संदर्भेणेशानादिशब्दानां शिवे रूढिमुपवर्ण्योपसंहृतम् । तस्मादुपपदादिसंकोचकरहिताभिरीशानादिश्रुतिभिः शिवस्य निरतिशयैश्वर्यासिद्धिर्वज्रलेपायते " इति ।

एवं समुद्रशायित्वमपि न विष्णवेकनिष्ठम् । " अम्भस्यपारे " इत्यादिसूक्ते " यमन्तः समुद्रे कवयो वयन्ति " विद्युतः पुरुषादधि " इत्युपन्यस्तलिङ्गयोः समुद्रशायित्वविद्युत्प्रभत्वरूपयोः–

लिङ्गमूर्तिं महाज्वालामालासंवृतमव्ययम् ।
लिङ्गस्य मध्ये रुचिरं चन्द्रशेखरविग्रहम् ॥
व्योममार्गे तथा लिङ्गे ब्रह्माणं हंसरूपिणम् ।
विष्णुं वराहरूपेण लिङ्गस्याधस्त्वधोमुखम् ॥

टि०— ब्रह्माणं दक्षिणे तस्य कृताञ्जलिपुटं स्थितम् ।
वामे विष्णुं महाबाहुं कृताञ्जलिपुटं तथा ॥
मध्ये लिङ्गं महाघोरं महाब्धेरम्भसि स्थितम् ।
ध्यात्वा प्रदोषसमये शिवसायुज्यमाप्नुयात् ॥
" एकार्णवे तु त्रैलोक्ये ब्रह्मा नारायणात्मकः ।
भोगिशय्यागतः शेते त्रैलोक्यज्ञानबृंहितः ॥
जनस्थैर्योगिभिर्देवश्चिन्त्यमानोऽब्जसंभवः ।
ततोऽवतीर्य विश्वात्मा देहमाविश्य चक्रिणः ॥
सुष्वाप योगशयन एकीभूयाथ विष्णुना ।
ब्रह्मा कमलवर्णाभो रुद्रः कालाग्निसंनिभः ॥
पुरुषः पुण्डरीकाभो रूपं तत्परमात्मनः ।
तप्तहेमनिकायाभं शितिकण्ठं त्रिलोचनम् ॥
प्रसादसुमुखं वीक्ष्य प्रणेमुर्जातकौतुकाः ।

इत्यादिना महता संदर्भेण शिवपरत्वस्यापि वर्णनेन विष्णवसाधारणत्वं निराकृतम् ।

एवं लक्ष्मीपतित्वमपि न तथा । " ह्रीश्च ते " इति मन्त्रस्य केषांचिद्ग्रहयज्ञे सोमाधिदैवतगौरीपूजायां विनियोगस्य स्मृत्यर्णवादिषूक्तत्वादन्यत्र च विनियोगानुपलम्भात्प्रथमश्रुतत्वाच्च। हृल्लेखाह्वयभुवननायिकापरत्वात्तदनुरोधेन लक्ष्मीशब्दस्य वायुसंहितायां—'तत्र माहेश्वरी लक्ष्म्या मूर्तिर्मूर्तिमतः प्रभोः " इत्यारभ्य " तस्याङ्कमण्डलारूढा शक्तिर्माहेश्वरी वरा । महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा ॥ इति श्रुतायां महेश्वरशक्तिरूपायां पराशक्त्यंशलीलायां वृत्त्युपपत्तेः । " श्रीश्च ते लक्ष्मीश्च पत्न्यौ" इति वाजसनेयिपाठे श्रीशब्दस्य समानप्रकरणगतहृल्लेखाश्रुत्यनुरोधेनोमायामेव " श्रियं लक्ष्मीमौपलामम्बिकां गाम् " इत्यायुष्यसूक्ते तत्र प्रगोगदर्शनाद्वृत्त्युपपत्तेः । हृल्लेखायाः कमलायां प्रयोगादर्शनेन वैपरीत्यशङ्कानवकाशात् । लैङ्गे ब्रह्मनारायणकृतशिवस्तोत्रे—" नमोऽस्तु लक्ष्मीपते श्रीपते ह्रीपते नमः " इत्युपबृंहणाच्च । " ह्रीश्च ते लक्ष्मीश्च पत्न्यौ " इत्यनेनोमापतित्वलिङ्गाभिधानप्रतीतेः । इत्यादिसंदर्भेण विष्णवेकनिष्ठत्वस्य लक्ष्मीपतित्वलिङ्गे निराकृतत्वात् । एवं ब्रह्माण्डवीर्यत्वमपि विष्णवेकनिष्ठमित्यस्य निराकरणं ( शि० त० वि० श्लो० ४९ ) कृतम्—" आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् " इत्यादिना । " अप एव ससर्जाऽऽदौ तासु वीर्यमपासृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । इत्युपबृंहणोपन्यासेन पूर्वपक्षमनुभाष्य महता संरम्भेण कृतमिति विस्तरभयान्नेह लिखितम् । विपश्चिद्भिस्तत्रैव द्रष्टव्यमिति दिक् ।

व्या०—४२। ४९)। यत्तु त्वया चतुर्थपादे प्रवृत्तिनिमित्ततादधीन्यादिना सर्वशब्दानां विष्णौ परममुख्यत्वोपपादनं कृतं तदेव शिवस्य प्रजापतेश्चान्तर्यामित्वेन तयोरपि सर्वशब्दानां परममुख्यत्वोपपादनमिति न तेन समन्वयस्य विष्णौ व्यवस्थितत्वसिद्धिः। परंतु प्रवृत्तिनिमित्ततादधीन्यादिकथैवातीव वितथा। तथा हि—यस्य शब्दस्य प्रवृत्तिनिमित्तं यदाश्रितं तस्यैवार्थस्य स शब्दो वाचक इति न नियमः। किंतु यस्य शब्दस्य प्रवृत्तिनिमित्तमाश्रितत्वेन यथेष्टविनियोक्तृत्वरूपस्वातन्त्र्यविषयत्वेन वा यदधीनं तस्यार्थस्य स शब्दो वाचक इति। अत एव भृत्यगतस्य जयस्य राजानाश्रितत्वेऽपि तदधीनत्वमात्रेण राजा जयतीति व्यवहारः। न चैवं रिपुगतदुःखबन्धमरणादीनां राजाधीनत्वमात्रेण राजा दुःखी मृतो बद्ध इति प्रयोगप्रसङ्गः। तत्प्रयोगप्रयोजकसत्त्वेऽपि राज्ञो दुःखादियोग्यतया राज्ञः सदेव दुःखादिकमुच्यत इति वा राज्ञि तदानीं दुःखाद्यभावनिश्चयेऽपि तस्मिन्दुःखादिकमसदेवाऽऽरोप्यते राजविरुद्धेनोच्यत इति वा संशयापादकत्वेनामङ्गलतया स्वस्थादिशब्दवत्तदप्रयोगोपपत्तेः। यद्वा स्वातन्त्र्यमात्रं शब्दप्रवृत्तौ न प्रयोजकम्, किंतु स्वगतत्वायोग्यत्वविशिष्टदोषत्वराहितं प्रतिस्वातन्त्र्यम्। एवं च जयस्य राजगतत्वयोग्यत्वेऽपि दोषत्वराहितत्वात्तं प्रति

टि०— १ प्रवृत्तिनिमित्तेति—चतुर्थपादे—"महतः परमव्यक्तम्" (क० ३।११) इति श्रुतिगतस्याव्यक्तादिशब्दस्य विष्णुपरत्वमव्यक्तत्वादीनां प्रवृत्तिनिमित्तानां विष्ण्वधीनत्वादिति स्थापितम्। "उक्तं हि त्वद्भाष्ये–(ब्र० सू० १।४।३) तदधीनत्वाच्चाव्यक्तत्वादीनां तस्यैवाव्यक्तत्वपरावरत्वादिकमर्थवत्" इति। यदधीनो गुणो यस्य तद्गुणी सोऽभिधीयते। यथा जीवः परात्मेति यथा राजा जयीत्यपि" इति च स्कान्दे" इति च। एतादृशतदधीनत्वं शिवादिगतस्वातन्त्र्यविषयत्वरूपमपि संभवतीति भावः।

२ वैतथ्यमुपादयितुं पूर्वपक्ष्यभिमतमनुभाषते—तथा हीति।

३ वाचक इतीति—एवकारः शेषः। नियम इत्यनुषङ्गः॥ अत एव—यथेष्टविनियोक्तृत्वरूपस्वातन्त्र्यविषयत्वरूपाधीनत्वस्य शब्दप्रयोगप्रयोजकत्वादेव।

४ राजाधीनत्वेति—राजनिमित्तत्वेत्यर्थः।

५ तत्प्रयोगप्रयोजकसत्त्वेऽपीति—तेषां दुःख्यादिशब्दानां यः प्रयोगस्तत्प्रयोजकस्य राजाधीनत्वस्य दुःखमरणादिषु सत्त्वेऽपीत्यर्थः। राज्ञो दुःखादियोग्यतया—दुःखाद्याश्रयत्वेन। राजविरुद्धेन—राजद्वेषिणा। स्वस्थादिशब्दवत्—शरीरारोग्यवाचकस्यापि तस्य स्वर्गस्थत्वादिबोधकत्वेनामङ्गलतयाऽप्रयोगवदित्यर्थः।

६ स्वातन्त्र्यम्—शब्दप्रवृत्तौ प्रयोजकमित्यनुषङ्गः। अत्र दोषत्वे स्वगतत्वायोग्यत्व-

व्या०—राज्ञः स्वातन्त्र्यं जयशब्दप्रयोजकम् । दुःखबन्धादीनां राजगतत्वायोग्यत्वाद्दोषरहितत्वाच्च तानि प्रति तस्य स्वातन्त्र्यं दुःखिबद्धादिशब्दप्रवृत्तौ न प्रयोजकम् । आश्रयत्वमपि तन्मात्रं न प्रयोजकम् । धनवोढरि भृत्ये धनाश्रयत्वेऽपि धनीत्यप्रयोगात् ।

एवं च जीवा एव तु दुःखिनः " कार्यकारणबद्धौ ताविष्येते विश्वतैजसौ " ( मा० का० १ । ११ ) इत्यादिश्रुतिगतदुःखिबद्धादिशब्दा जीवगतदुःखबन्धादिस्वतन्त्रस्य विष्णोर्वाचकाः । तेषां विष्णुगतत्वायोग्यत्वात् । दोषत्वेऽपि तानि विष्ण्वपेक्षया स्वगतत्वायोग्यताविशिष्टदोषत्वरहितानि भवन्तीति तानि प्रति तस्य स्वातन्त्र्यं दुःखिबद्धादिशब्दप्रवृत्तौ प्रयोजकमेव । न तु लोके दुःखिबद्धादिशब्दा रिपुगतदुःखबन्धादिस्वतन्त्रस्य राज्ञो वाचका इति व्यवस्था संघटत इति । [1]इदं तावदयुक्तम् । विविधकृष्णप्रतिमानिर्माणचतुरे शिल्पिनि तत्प्रतिमासु कृष्णादिशब्दप्रवृत्तिनिमित्तं कृष्णाद्याकारं प्रति स्वातन्त्र्ये सत्यपि तस्मिन्कृष्णशब्दप्रयोगादर्शनात्[2] । न च[3] प्रतिमासु कृष्णादिशब्दाः कृष्णाद्याकारसादृश्येन गौणा एव न तु वाचका इति न तासु कृष्णाद्याकारः कृष्णशब्दप्र[4]वृत्तिनिमित्तमिति वाच्यम् । " [5]इवे प्रतिकृतौ "

टि०—वैशिष्ट्यं च सामानाधिकरण्यसंबन्धेन । अत्र राजगतत्वायोग्यत्वस्य दोषत्वस्य च जयेऽसत्त्वादुभयाभावप्रयुक्तविशिष्टाभावः । ततश्च तादृशाभाववज्जयं प्रति स्वातन्त्र्यं राज्ञि विद्यत एवेति तस्मिञ्जयीति व्यवहारोपपत्तिः । शत्रुगतदुःखादिषु राजगतत्वायोग्यत्वदोषत्वयोर्विशेषणविशेष्ययोरुभयोः सत्त्वेन विशिष्टाभावाभावान्न तत्र तत्पदवाच्यत्वमिति । यद्यपि विष्णौ जीवगतदुःखादिषु स्वगतत्वायोग्यत्वदोषत्वयोः सत्त्वेन दुःखिबद्धादिव्यवहारानुपपत्तिस्तथाऽपि विष्ण्वपेक्षया तेषु दोषत्वाभावमुपगम्य विशेष्याभावात्तादृशव्यवहारो निर्वाह्य इति तात्पर्यार्थः ।

१ एवं पूर्वपक्ष्यभिमतं तादधीन्यस्य शब्दप्रवृत्तिनिमित्तं प्रदर्श्य दूषयति—इदं तावदयुक्तमिति ।

२ शब्दप्रयोगादर्शनादिति । कृष्णाकारे शिल्पिनः स्वगतत्वायोग्यत्वरूपविशेषणसत्त्वेऽपि दोषत्वरूपविशेष्याभावात् । विशिष्टाभाववदाकारं प्रति स्वातन्त्र्यवतः कृष्णशब्दव्यवहार्यत्वाभावात् पूर्वोक्तनियमे व्यभिचार इति दूषणार्थः ।

३ कृष्णाकारो न कृष्णशब्दप्रवृत्तिनिमित्तमपि तु कृष्णसादृश्यम् । तत्र तस्य दोषत्वेन विशेष्यवद्विशेषणस्यापि सत्त्वेन विशिष्टाभावाभावान्न व्यभिचार इति मत्वाऽऽह—न चेति ।

४ प्रवृत्तिनिमित्तमिति—किंतु कृष्णाद्याकारसादृश्यमेव । तच्च दोषरूपमिति शेषः ।

५ इवे प्रतिकृताविति—कृष्णाद्याकारस्यैव शब्दप्रवृत्तिनिमित्तत्वमुपपादयन्पूर्वोक्तव्यभिचारं द्रढयति—इवे प्रतिकृताविति ।

व्या०-( पा० सू० ५ । ३ । ९६ ) इत्यधिकारे विहितस्य कन्प्रत्ययस्य "जीविकार्थे चापण्ये" (पा०सू० ५ । ३ । ९९) इति लुपि सति निष्पन्नकृष्णादिशब्दानां कृष्णाद्याकारसदृशाकारवाचकत्वात् । न च प्रवृत्तिनिमित्ताश्रयत्वे सत्यपि धनवोढरि भृत्ये धनीतिप्रयोगादर्शनात्तदपि शब्दप्रयोगप्रयोजकं न स्यात्प्रवृत्तिनिमित्तस्वातन्त्र्यस्यापि शब्दप्रयोगप्रयोजकत्वाभावे भृत्ये जयिनि राज्ञि जयिशब्दप्रयोगश्च न स्यादिति वाच्यम् । यतः " तदस्यास्त्यस्मिन्निति मतुप् " ( पा० सू० ५ । २ । ९४ ) इति विहिता मत्वर्थीयप्रत्ययाः स्वभावात्केभ्यश्चित्प्रातिपदिकेभ्योऽस्यास्तीति षष्ठ्यर्थ एव भवन्ति, केभ्यश्चिदस्मिन्नस्तीति सप्तम्यर्थ एव । षष्ठ्यर्था अप्येकशतं संबन्धाः सन्तीति तेभ्यस्तेभ्यः प्रादिपदिकेभ्यस्तत्तत्संबन्धविशेष एव केभ्यश्चित्षष्ठ्यर्थे सप्तम्यर्थे च भवन्ति । इयं व्यवस्था प्रयोगानुसारेण स्वयमेव लभ्यत इति लाघवार्थं " तदस्यास्त्यस्मिन्निति " सामान्येन विधानम् । यथा " पाय्यसांनाय्यनिकाय्यधाय्यामानहविर्निवाससामिधेनीषु " ( पा० सू० ३ । १ । १२९ ) इत्यादिसूत्रेषु हविःसामिधेनीविशेषादिवाचकानामपि सांनाय्यधाय्यादिशब्दानां सामान्येन हविराद्यर्थेषु विधानम् । एवं च धनप्रातिपदिकान्मत्वर्थीयप्रत्ययाः षष्ठ्यर्थ एव । तत्रापि स्वस्वामिभाव एव भवन्तीति न धनवोढरि धनीति प्रयोगप्रसङ्गः । जयप्रातिपदिकात्तु ते स्वस्वामिभावरूपषष्ठ्यर्थे, आश्रयत्वरूपसप्तम्यर्थे चेति राज्ञि भृत्ये च न जयिशब्दप्रयोगानुपपत्तिः ।

यद्वा भृत्यगतजयस्य तत्फलभाजि राज्ञ्युपचारेण जयिशब्दप्रयोगोऽस्तु । अत एव माघकाव्ये दृश्यते-

विजयस्त्वयि सेनायाः साक्षिमात्रेऽपदिश्यताम् ।
फलभाजि समीक्ष्योक्ते बुद्धेर्भोग इवाऽऽत्मनि ॥ (स० २।५९) इति ।

तस्मात्सर्वेषामेव रूढानां यौगिकानां च शब्दानां प्रवृत्तिनिमित्ताश्रयत्वं तत्स्वातन्त्र्यं चेत्युभयमपि वाचकताप्रयोजकमित्येतत्सकललौकिकपरीक्षकव्यवहारविरोधि तुच्छं वचः । नहि स्वस्थादिशब्दानामारोग्यादिमदित्यादिवाचकत्वे सत्यपि स्वर्गस्थत्वाद्यर्थान्तरप्रत्यायकत्वेनामङ्गलत्वादेवाप्रयोग इतिवत्पूर्णवर्ममःरके

टि०- १ प्रातिपदिकेभ्य इति-तत्प्रकृतिकसुबन्तेभ्य इत्यर्थः । सुबन्तात्तद्धितोत्पत्तेः " घकालतनेषु " इतिसूत्रज्ञापितत्वात् ।

व्या०—राज्ञि मृतशब्दस्य वाचके सत्यप्यमङ्गलतयाऽप्रयोग इति कश्चिदपि संमन्यते। एवमादीनि प्रवृत्तिनिमित्ततादधीन्यादिदूषणान्यस्माभिर्ग्रन्थान्तरे वर्णयिष्यन्ते। परकल्पितमर्यादयैव परमतदूषणार्थं प्रवृत्तेऽस्मिन्प्रकरणे तानि न संगृहीतानि। इत्थं पञ्चाधिकरणीदूषणार्थं दर्शितयैव त्वन्मर्यादया समन्वयाध्यायगताधिकरणानां शैथिल्येन त्वदभिमतस्य विष्णौ व्यवस्थितस्य समन्वयस्यासिद्धौ तस्मिन्संभावितयुक्त्यादिविरोधनिराकरणार्थानि द्वितीयाध्यायगताधिकरणान्यभित्तिचित्रायमाणान्याचिन्त्याद्भुतमाहिम्नि तर्कागोचरे परमेश्वरे युक्तिविरोधादिकं न परिपन्थीति वदतस्तव मते तान्यकाण्डताण्डवरूपाणि चेति। तेषां तदुभयोपजीवनेन प्रवृत्तानां साधनफलाध्यायगताधिकरणानां च शैथिल्यं स्पष्टमेव। यदि त्वेतानि त्वच्छास्त्रगतान्यधिकरणानि त्वद्भाष्ये तत्तदधिकरणेषु सुनिर्णीतार्थसंवादकतया त्वदुदाहृतैस्त्वदेकदृष्टैः कमठमाठरकौण्डरव्यादिश्रुतिवाक्यैस्तदुपबृंहणैश्च समर्थनीयानि, तर्हि तवालं न्यायचिन्तया त्वन्मतानुसारेणैव परस्परं व्याहतया प्रत्यधिकरणमनिर्व्यूढया च। नहि प्रत्यधिकरणं तव न्यायव्युत्पादनव्यसनिताऽस्ति। "संभृतिद्युव्याप्त्यपि चातः (ब्र० सू० ३।३।२४) इत्याद्यधिकरणानां वचनमात्रावलम्बनानामपि त्वन्मते दर्शनात्। संभृत्यधिकरणे हि—सर्वमुमुक्षूणामानन्दो ज्ञानं निर्दोषत्वरूपं सत्यत्वं चेति[1] त्रयो गुणा नियमेनोपास्याः प्रधानफलसिद्धये। प्रधानफलस्य मोक्षस्य निर्दोषज्ञानानन्दरूपतया "तं यथा यथोपासते" ( ... ... ) इति श्रुत्यनुसारेण फलानुसारिगुणोपसंहारावश्यंभावात्" इति। "आनन्दादयः प्रधानस्य"(ब्र० सू० ३।३।१२) इत्यधिकरणे प्रतिपाद्यत्वेन तवाभिमतम्। इत्थं त एव सर्वमुमुक्षूपास्या इत्युक्तमयुक्तम्। "उक्षा सन् द्यावापृथिवी बिभर्ति" "एष हि सर्वेषु लोकेषु भाति" इति श्रुतयोः संभृतिद्युव्याप्त्योरपि सर्वमुमुक्षूपास्यत्वान्मोक्षस्वाभाव्यभरणस्य प्रकाशव्याप्तेश्च सर्वापेक्षितत्वेन तयोरपि तत्क्रतुन्यायविषयत्वादित्याक्षिप्य, यद्यप्येवं तथाऽपि ते न सर्वोपास्याः। "देवादीनामुपास्यास्तु भूतिव्याप्त्यादयो गुणाः। आनन्दाद्यास्तु सर्वेषामन्यथाऽनर्थकृद्भवेत्।

टि०— १ संभृत्यधिकरण इति। अत्र मध्वभाष्ये—देवादीनामुपास्यास्तु भूतिव्याप्त्यादयो गुणाः। आनन्दाद्यास्तु सर्वेषामन्यथाऽनर्थकृद्भवेत्" इति वचनं तत्त्वप्रकाशिकायां भूत्यादिगुणानां देवोपास्यत्वमात्रं कुतः, अन्येषामपि त उपास्या भवेयुरित्यवतार्य देवानामेव ते गुणा उपास्या नान्येषामिति व्याख्यातमस्ति।

इत्यप्पदीक्षितेनेदं मध्वोपक्रममक्रमम् ।
तद्रीत्यैव मतं ध्वस्तं संक्षेपेण समन्ततः ॥ ६० ॥

तस्माद्यत्तेऽनुपास्यं विमलसुखतनु ब्रह्म कूटस्थमिष्टं
शास्त्रेऽप्यस्मिन्विचार्यं गमितमुपनिषल्लक्ष्यतां मुक्तभोग्यम् ।
सोऽसावानन्द एवेत्युचितमसुमतामावृतो यस्त्वयोक्त-
स्तद्भेदे नास्ति मानं किमपि निगमतो लाघवेनैक्यसिद्धेः ॥६१॥

व्या०—इति वचनात्" इति किंचिद्वचनमेव विलिख्य सिद्धान्तितम् ।

एवमन्यान्यप्यधिकरणान्युदाहरणीयानि । तस्माद्धूर्तकल्पितवचनैकावलम्बनं न्यायविधुरमिदं मध्वमतं सूक्ष्मदृशा न वीक्षणीयमिति भावः ॥ ५९ ॥ ६० ॥

इत्थं कृतेन मध्वमतध्वंसनेन ग्रन्थेनाऽऽत्मनः पौरोभाग्यपदं परिहरन्नेव तत्र युक्तांशान् गृहीत्वा तैर्जीवब्रह्माभेदसिद्धिप्रकरणस्यास्य तत्तन्निर्णयफलकत्वेन वादकथारूपत्वं संपादनीयं दर्शयति—तस्मादिति ।

त्वया तावत्परं ब्रह्मोपासनाविषयादन्यद्विशुद्धसुखस्वरूपं परिणामादिविकाररहितं मुक्तानां भोग्यतया निरतिशयपुरुषार्थरूपमिष्यते । तदेव चास्मिञ्छारीरके शास्त्रे विचार्यं त्वयोपेयते । तत्सर्वं युक्तमेव । तच्चानुपास्यं ब्रह्मोपनिषदां वाच्यं न भवतीति तल्लक्ष्यतां नीतमस्माभिः पञ्चमाधिकरणदूषणैः (श्लो० ५७) । प्राणिनां च संसारदशायामविद्यावृतो विशुद्धानन्दोऽस्तीति च त्वयोक्तं, तदपि युक्तमेव । एवं च सति योऽसौ संसारदशायामावृतो जीवानन्दस्त्वयेष्यते, तदेव विशुद्धसुखस्वरूपं ब्रह्म न ततोऽन्यदङ्गीकर्तुमुचितम् । उपनिषत्सु जीवब्रह्माभेदोद्घोषदर्शनात् । तत्रैव तर्काणामानुकूल्याच्च । तथा हि—ब्रह्मानन्दो देवदत्तजीवानन्दान्न भिद्यते । तं प्रत्यनादिभावावृतत्वात् । तद्भोग्यत्वाच्च

टि०— १ अन्यान्यपीति । "पुरुषविद्यायामिव चेतरेषामनाम्नानात्" ( ब्र० सू० ३ । ३ । २५ ) इत्यधिकरणे मध्वभाष्यम्—"सर्वतः पौरुषे सूक्ते गुणा विष्णोरुदीरिताः । अत्रापि नैव सर्वोऽपि तस्मात्कार्योपसंहृतिः" इति वचनमिति । इदं तत्त्वप्रकाशिकायां—"कर्तव्य एव गुणोपसंहारः । सर्वगुणोपास्तियोग्यानामप्यधिकारिणां भावात् । एकस्यामेव विद्यायां सर्वगुणानामनुक्तत्वात्सर्वविद्योत्तमायामपि पुरुषविद्यायां केषांचिदेव गुणानां पठितत्वात्केषांचिदपठितत्वादिति पूर्वपक्षयित्वा भवेदुपसंहारस्य कर्तव्यता यदि स्यात्पुरुषविद्यायाः सर्वोक्तिमत्वम् । तत्रापि केषांचिद्गुणानामनुक्तत्वात् । तदेव कुत इत्यत आह भाष्ये—सर्वत इति । इत्यवतारितम् । निर्मूलेनैव तेन वचनेनास्याधिकरणस्य सिद्धान्तः ॥ ५९ ॥

व्या०—देवदत्तजीवानन्दवत् । घटादीनां देवदत्तं प्रति कुड्यादिभावावृतत्वे ज्ञानप्रागभावरूपानाद्यभावावृतत्वेऽप्यनादिभावावृतत्वं नास्तीति न तेषु व्यभिचारः । अनादिभावश्चाविद्यारूपः संसारदशायां जीवानन्दस्य ब्रह्मानन्दस्य च तं प्रत्यावारकस्तवापि संमतोऽस्तीति प्रथमाधिकरणदूषणे ( श्लो० १२ ) दर्शितत्वान्न पक्षे हेत्वसिद्धिः । न वा दृष्टान्ते साधनवैकल्यम् । जीवानन्दाद् ब्रह्मानन्दोऽपि मुक्तिदशायामभिव्यक्तो मुक्तानां भोग्य इति "तदेतत्प्रेयः पुत्रात्" ( बृ० उ० १ । ४ । ८ ) इत्यादिश्रुतिं ब्रह्मविषयां वदतस्तवापि संमत इति न द्वितीयहेतोरप्यसिद्धिः । अस्मन्मते यद्यपि संसारदशायामावृतो जीवानन्द एव ब्रह्मानन्दस्तथाऽपि तत्र साध्यनिश्चयाद् दृष्टान्तत्वमुचितम् । साध्यनिश्चयो हि दृष्टान्तत्वे तन्त्रं न पक्षान्यत्वमपि ।

यद्वा जीवब्रह्मानन्दयोर्बिम्बप्रतिबिम्बभावेन व्यावहारिकभेदसत्त्वात्पक्षदृष्टान्तभावः । प्रतिबिम्बे चैतन्यांश एवानावृतः । आनन्दांशस्त्वावृत एवेत्यभ्युपगमान्न साधनवैकल्यमपि ।

नन्वत्र साध्यं जीवानन्दाभेदरूपं जीवानन्दभेदप्रतिषेधरूपं वा । नाऽऽद्यः। मया जीवब्रह्मानन्दयोरसाधारणरूपाभ्यां भेदस्येवाऽऽनन्दत्वादिसाधारणरूपेणाभेदस्यापि स्वीकृतत्वेन सिद्धसाधनतापत्तेः । न द्वितीयः। त्वयाऽपि जीवब्रह्मानन्दयोर्बिम्बप्रतिबिम्बभूतयोर्व्यावहारिकभेदस्याङ्गीकृतत्वेन तत्प्रतिषेधे बाधापत्तेरिति चेत् । उच्यते । देवदत्तजीवानन्दगतासाधारणधर्मावच्छिन्नप्रतियोगिताकस्तदभेदः साध्य इति नाभेदसाध्यपक्षे सिद्धसाधनं, नापि भेदप्रतिषेधसाध्यपक्षे बाधः । त्वया ब्रह्म जीवाद्भिद्यते सर्वज्ञत्वादित्याद्यनुमाने व्यावहारिकभेदेन सिद्धसाधनपरिहाराय यद्विशेषणं निवेश्यते तद्विशिष्टभेदप्रतिषेधस्यात्र साध्यत्वाङ्गीकारात् । त्वया हि तत्र धर्मिसमसत्ताकत्वं धर्मिज्ञानाबाध्यत्वं वा विशेषणं निवेश्यते । तद्विशिष्टभेदप्रतिषेधोऽत्र साध्यत इति न किंचिदनुपपन्नम् ॥ १ ॥ एवमग्रिमानुमानेष्वप्यभेदशब्दार्थो वर्णनीयः ।

ब्रह्म जीवाभिन्नं निर्दुःखत्वे सति सुखवत्त्वात् । निर्विकारत्वे सति ज्ञानवत्त्वा-

टि०— १ घटादीनामिति—घटादीनां देवदत्तं प्रति कुड्यादिभावावृतत्वेन तेषु साध्याभावेन व्यभिचारवारणायानादित्वस्य हेतौ प्रवेशः । तेषामेव देवदत्तीयज्ञानप्रागभावावृतत्वेन व्यभिचारवारणाय भावत्वस्य निवेश इति भावः । प्रागभावस्य विषयावारकस्य स्वीकर्तृमतेनेदम् । अन्यमते द्वितीयो हेतुः प्रथमहेतावेव भावपदानिवेशो वेति ।

व्या०—ज्जीववत् । मतद्वयेऽपि ब्रह्मणि जीवे च स्वरूपसुखस्य स्वरूपज्ञानस्य च धर्म्यभिन्नत्वेऽपि विशेषबलादविद्यावशाद्वा धर्मत्वमप्यस्तीति न पक्षदृष्टान्तयोर्विशेषासिद्धिः । नापि विशेषणासिद्धिः । मतद्वयेऽप्यन्तःकरणस्यैव दुःखादिसकलविकाराश्रयत्वात् । यद्यप्याध्यासिकदुःखादिविकाराश्रयत्वं जीवस्य प्रपञ्चाश्रयत्वं च तदुपादानस्य ब्रह्मणोऽप्यस्ति, तथाऽपि वस्तुतो निर्दुःखत्वं निर्विकारत्वं च विशेषणम् । तच्च धर्मिसमसत्ताकदुःखविकारशून्यत्वरूपम् । वैषयिकसुखाश्रये वृत्तिज्ञानाश्रये चान्तःकरणे व्यभिचारवारणाय रूपादिषु तद्वारणाय हेतुद्वयेऽपि विशेष्यभागः ॥ २ ॥

ब्रह्म देवदत्तजीवाभिन्नं तत्कर्मफलभोक्त्रा स्वेनाभिन्नत्वात् । त्वन्मते तस्य तत्कर्मफलभोक्तृत्वस्य गुहाधिकरणे व्यवस्थापितत्वात् । अस्मन्मते तथाभूतेन जीवेनाभिन्नत्वान्मतद्वयेऽपि हेतोर्नासिद्धिः । न चास्मन्मते हेतोः साध्यावैषम्यं साध्ये जीवस्य जीवत्वेन हेतौ कर्मफलभोक्तृत्वेन निवेश इति विशेषणभेदेन तयोर्भेदात् । यद्यपि भोक्त्रभिन्नत्वादित्येतावताऽपि न व्यभिचारस्तथाऽपि तत्कर्मफलभोक्तृत्वं तदभेदमन्तरेणानुपपन्नमिति विपक्षे बाधकतर्कोत्थापकतया व्याप्तिग्रहानुकूलत्वान्न विशेषणवैयर्थ्यम् ॥ ३ ॥

"हिरण्यगर्भादिजीवा ब्रह्माभिन्नाः । तदीयदेहेन्द्रियैर्भोक्त्राऽभिन्नत्वाद् ब्रह्मवत्"। "ब्राह्मेण जैमिनिरुपन्यासादिभ्यः" ( ब्र० सू० ४ । ४ । ५ ) इत्यधिकरणे त्वया ।

"आदत्ते हरिहस्तेन हरिदृष्ट्यैव पश्यति ।
गच्छेच्च हरिपादेन मुक्तस्यैषा स्थितिर्भवेत्"

टि०— १ ब्राह्मेणेति—तथा हि तत्त्वप्रकाशिकायां—भोगो विषयः । मुक्तानां युक्तो न वेति संदेहः । न युक्त इति पूर्वपक्षः । किं मुक्तानां देहोऽस्ति न वा । नाऽऽद्यः । तेषां संसारपारंगतत्वेन शरीरानुपपत्तेः । अन्यथा मुक्तत्वस्यैवायोगात् । न द्वितीयः । शरीराभावे भोगासंभवात । इति पूर्वपक्षं प्रापय्य युज्यते मुक्तस्य भोगः । न चोक्तविकल्पः । देहाभावाभ्युपगमात् । सर्वदेहपरित्यागेनैव मुक्तत्वात् । न चोक्तदोषः । मुक्तस्य स्वदेहाभावेऽपि परमात्मानं प्रविष्टस्य तद्देहेनैव ग्रहवच्चोगसंभवादिति जैमिनिराचार्यो मन्यते । कुत एतदित्याह—स इति श्रुतेः । ननु "स्वयं देहविधुरस्य कथमन्यदेहेन भोगो युज्यते प्रलयादावभावादित्यत आह" इति । "गच्छामि विष्णुपादाभ्यां विष्णुदृष्ट्या च दर्शनम्" इत्यादिपूर्वस्मरणान्मुक्तस्यैतद्भविष्यतीति ब्रह्मतन्त्रोक्तयुक्तेश्च" इति भाष्यग्रन्थमवतार्य सिद्धान्तितम् । एतेन परेषां ६४ तमश्लोके प्रदर्श्यमानासुरत्वरूपणे हेतुः प्रकटीकृत इति ।

व्या०—इत्यादिवचनानि लिखित्वा सायुज्यमुक्तिं गता हिरण्यगर्भादयो ब्रह्मणो देहं प्रविष्टास्तद्देहेन्द्रियैरेव भुञ्जत इति व्यवस्थापितत्वान्न त्वन्मते हेत्वसिद्धिः । नास्मन्मते तदसिद्धिः । अस्माभिरपि पर्यङ्कविद्याप्रतिपादितया रीत्या ब्रह्मणो देहेन्द्रियाणां भोगस्य च स्वीकृतत्वेन तद्देहेन्द्रियैर्भोक्त्रा ब्रह्मणा हिरण्यगर्भादीनामभिन्नत्वस्याङ्गीकृतत्वात् । पूर्ववद्विशेषणभेदेन हेतुसाध्ययोर्भेदः ॥ ४ ॥

जीवा ब्रह्माभिन्नास्तदिन्द्रियैर्भोक्त्राऽभिन्नत्वात्, आकाशादिप्रपञ्चस्रष्टृत्वाद् ब्रह्मवत् । यद्यपि मुक्तहिरण्यगर्भादीनामिव सर्वेषां जीवानां ब्रह्मदेहगतैरिन्द्रियैर्भोक्तृता नास्ति, तथाऽप्यस्मदादिदेहगतान्यपीन्द्रियाणि ब्रह्मण एव करणानि । अस्मदादीनां तु स्वामिनः कुठारैर्भृत्यानामिव ब्रह्मकरणैरेव व्यवहार इति त्वया " ज्योतिराद्यधिष्ठानं तु तदामननात् " ( ब्र० सू० २ । ४ । १५ ) इत्यधिकरणे व्यवस्थापितत्वात् । त्वन्मते नाऽऽद्यहेतोरसिद्धिः । नापि द्वितीयहेतोरसिद्धिः। ध्यानमनोराज्यविषयप्रपञ्चेषु जीवानां स्रष्टृत्वस्य त्वयाऽङ्गीकृतत्वात् । " अहमेव जगत्स्रष्टा ब्रह्मेति " जीवानां ध्यानादिसंभवाच्च । वासिष्ठरामायण ऐन्दवोपाख्याने ( उत्पत्ति० प्र० ८६ । ३७–३८ ।

" अन्तःस्थेनैव मनसा चिन्तयामासुरादृताः ।
ब्रह्माऽहं जगतां स्रष्टा कर्ता भोक्ता महेश्वरः ॥
लोकपालपुरैः सार्धं भुवनानि चतुर्दश ।
निर्मितानि मयैतानि तेषामन्तरहं स्थितः ॥ "

इतीन्दुनामकब्राह्मणपुत्राणां तथा ध्यानप्रतिपादनाच्च । अस्मन्मते पूर्ववद्धेतोरसिद्धिः साध्या वैशिष्ट्यनिरासः । न च ब्रह्मजीवयोर्गुणोत्कर्षापकर्षसत्त्वाद्विरुद्धगुणाक्रान्त्या भेदः शङ्कनीयः । ब्रह्मगतगुणोत्कर्षस्य तदभिन्नजीवसाधारण्येऽपि जीवे त्वदभिमतस्य ज्ञानबलानन्दोत्कर्षस्येव संसारदशायामावृतत्वेन प्रकाशासंभवस्य त्वन्मते ब्रह्मणोऽचिन्त्याद्भुतशक्तिमहिम्ना तस्य तर्कागोचरत्वमहिम्ना च विरुद्धगुणाक्रान्तेस्तद्भेदासाधकत्वस्य च प्रथमद्वितीयतृतीयाधिकरणदूषणावसरे ( श्लो० २० । २१ । २३ । ४१ । ५० ) प्रपञ्चितत्वात् ।

वस्तुतस्तु त्वदभिमते ब्रह्मणि जीवगुणविरुद्धत्वेनाऽऽशङ्कनीयः कोऽपि गुणः श्रुतिसिद्धो न लभ्यते । त्वया ह्यस्मिञ्छारीरकशास्त्रे विचारणीयं शुद्धं ब्रह्मोपास्यस्य प्रतिबिम्बरूपस्य बिम्बरूपं न तु स्वयमुपास्यमिति निरूपितं " तथाऽन्यत्प्रतिषेधात् " ( ब्र० सू० ३।५।३७) इत्यधिकरणे । एवमङ्गीकुर्वतस्तव मते

व्या०—सृष्ट्यादिवाक्यमन्यच्च सकलं गुणवाक्यमुपास्यप्रतिबिम्बपरमेव, न तु विशुद्धब्रह्मपरम्। विशुद्धं ब्रह्म "यतो वाचो निवर्तन्ते" ( तै० उ० २।४ ) "यद्वाचाऽनभ्युदितम्" ( केन० १।४ ) इत्यादिभिः कैश्चिदेवास्मदभिमतनिर्गुणवाक्यैर्लक्षणया प्रतिपाद्यमभ्युपगन्तव्यमित्युपपादितमस्माभिः पञ्चमाधिकरणदूषणे ( श्लो० ५६ )। ततश्च कुतो विशुद्धे ब्रह्मणि जगत्कर्तृत्वादिविरुद्धगुणसिद्धिर्येन तस्य जीवभेदः शङ्क्येत। न च तदा सर्वाकाशादिप्रपञ्चस्रष्टृत्वादित्यादिजीवब्रह्माभेदसाधकानुमानानां दृष्टान्ते साधनवैकल्यं पक्षे हेत्वसिद्धिर्वा स्यादित्याशङ्कनीयम्। परमर्यादया पराभ्युपगन्तव्यार्थविरुद्धमपि पराभ्युपगममात्रमनुसृत्य हेतूकरणसंभवात्। त्वं ह्युपासनार्थमेव सर्वासु श्रुतिषु जगत्सृष्ट्याद्याम्नानं विशुद्धं ब्रह्मोपास्यं न भवतीति वदन्नपि विशुद्धस्य ब्रह्मणः स्रष्टृत्वं कर्मफलभोक्तृत्वं देहेन्द्रियादिमत्त्वमस्मदादिकरणस्वामित्वमित्यादिकमुपासनार्थं श्रुत्याऽऽम्नातत्वेन तवाभिमतं गुणजातमङ्गी करोषि। त्वदभ्युपगन्तव्यार्थाविरुद्धास्त्वनादिभावावृतत्वादित्याद्या अतीताश्चत्वारो हेतवः। त एव "आवृतो यस्त्वयोक्तः" "मुक्तभोग्यं" "कूटस्थनित्यं" "विमलसुखतनु" इति विशेषणैर्मूलश्लोके ( ६१ ) संगृहीताः।

अथापि स्याज्जीवानां सुखादिव्यवस्थया भिन्नानां कथमेकेन ब्रह्मणा सममभेदः स्यादितीदमपि दत्तोत्तरमर्जुनाखण्डलादीनां सुखादिवैचित्र्ये सत्यपि त्वदीयाभेदाभ्युपगमप्रदर्शनेन त्वन्मते ब्रह्मशक्त्यादिमहिम्ना विरुद्धगुणवत्त्वस्य भेदासाधकत्वस्य च व्यवस्थापनेन च।

एवं च "यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्नाः" इत्यादिश्रुतिभिर्जीवब्रह्मणोर्जीवानां चाभेदसिद्धिरप्रत्यूहेति न भेदशङ्कावकाशः। न च भेदश्रुतिष्वपि सतीषु कुतोऽयमभेदश्रुतिवाक्यपक्षपात इति शङ्क्यम्। विरुद्धगुणवत्त्वादेरकिंचित्करत्वे स्थिते साधकतर्कानुग्रहेणाभेदश्रुतीनां प्राबल्यात्। न चैवमपि जीवाभिन्नमखण्डं त्वदभिमतं ब्रह्म श्रुतिभिर्न सिध्येत्, वाक्यानां पदार्थसंसर्गपरत्वस्य पदानां प्रवृत्तिनिमित्तसंसर्गपरत्वस्य व्युत्पत्तिसिद्धत्वेन जीवपरवाक्यानां ब्रह्मपरवाक्यानां च तत्तत्पदार्थसंसर्गपरतायास्तदन्तर्गतपदानां प्रवृत्तिनिमित्तसंसर्गपरतायाश्च वक्तव्यतया सखण्डविषयत्वावश्यंभावादिति वाच्यम्। त्वया जीवे ब्रह्मणि च निर्विकारे गुणक्रियादीनां नित्यत्वेन धर्म्यभिन्नत्वेन समवायाश्रयाश्रयिभावादिसंसर्गरहितत्वेन चाभ्युपगततया त्वन्मतेऽपि श्रुतीनां तत्संसर्गविषयकप-

मध्वादिभिर्मुषितमत्र सदद्वितीयं
प्रत्याहरन्तादिदमागममौलिरत्नम् ।
आच्छाद्य गोपितमसारतरैस्तदर्थै-
स्तत्क्षुल्लकाधिकरणस्थलमर्दनेन ॥ ६२ ॥

---

व्या०—सक्त्यभावात् । न च तेषां संसर्गाभावेऽपि संसर्गव्यवहारनिर्वाहकत्वेन मदभ्युपगतो विशेष एव तत्र पदार्थविधया वाक्यार्थविधया च भासमानः सन्नखण्डत्वविरोधी स्यादिति वाच्यम् । विशेषस्यापि त्वया धर्म्यभिन्नत्वस्योक्तत्वात् । तदङ्गीकारवैयर्थ्यस्य चास्माभिः प्रथमाधिकरणभङ्गे ( श्लो० २३ । २४ ) व्यवस्थापितत्वात् ।

एतेन—महावाक्यार्थोऽपि जीवब्रह्माभेदविषयत्वेन सखण्ड इति—निरस्तम् । [१]अभेदस्यापि धर्मिभिन्नस्याभावात् । धर्मिण एव संसर्गविधया प्रतीतिश्चेत्तावता द्वैतापत्त्यभावेनाविरोधाच्च । तस्मात्त्वदीयतत्तदधिकरणमर्यादापर्यालोचनयैवाशेषोपनिषन्महातात्पर्यवेद्यं सच्चिनन्दैकरसमद्वितीयं ब्रह्म सिद्धम् ॥ ६१ ॥

चोरापहृतरत्नप्रत्याहरणसादृश्यप्रदर्शनेनोपसंहरति——मध्वादिभिरिति । यथा खलु त्रासादिदोषराहित्यतया सदृशान्तरराहितं सम्राजः किरीटरत्नमासन्नसेविभिः किरातैर्मुषित्वा क्षुद्रेषु स्वगृहेषु तृणदारुशलाकादिभिरत्यन्तासारैस्तदुपकरणैराच्छाद्य संगोपितं तदीयगृहभूम्याक्रमणेनान्विष्य दृष्ट्वा राजकीयैः प्रत्याश्रीयेत, तथैवाद्वितीयमत एव भयरहितं निगमशिरसामलंकारभूतं परं ब्रह्म

---

टि०— १ एतेनेत्यस्यार्थं स्फुटयति—अभेदस्येति । ननु किमभिमतमायुष्मतः । अभेदस्य महावाक्यार्थत्वाभ्युपगमेऽखण्डत्वहानिरिति वदतः, किमभेदस्याऽऽत्मभिन्नत्वात्सत्यत्वेऽद्वैतहानिर्मिथ्यात्वे तत्त्वमसीत्यादेरतत्त्वावेदकत्वापत्तिरिति वोताऽऽत्मस्वरूपत्व एकतरपरिशेषापत्तिः, सापेक्षस्याभेदस्य निरपेक्षात्मरूपत्वायोगश्चेति वा । उभयथाऽपि तादृशाभेदबोधकमहावाक्यस्याखण्डत्वहानिरभिप्रेता ? तत्राऽऽद्यपक्षोऽनभ्युपगमपराहतः । द्वितीयपक्षस्तु समीचीनोऽभ्युपगतश्च । न हि तदानीमेकतरपरिशेषापत्तिर्दोषः । ज्ञानानन्दयोरात्माभेदेऽपि यथा नैकतरपरिशेषादिकं, कल्पितानन्दत्वादिधर्मात्, तथा प्रकृतेऽपि संभवात् । नापि निरपेक्षात्मरूपत्वायोगः । अभेदस्यापि निरपेक्षस्वभावत्वात् । ततश्च तादृशाभेदबोधकमहावाक्यस्य नाखण्डत्वहानिरपि । धर्मिरूपतयाभेदस्यासंसर्गत्वात् । संसर्गबोधकत्वे ह्यखण्डत्वं हीयेत, न धर्मिस्वरूपबोधकत्व इत्याह—अभेदस्यापीति ।

आद्रियध्वमिदमध्वदर्शनं
व्यध्वनं त्यजत मध्वदर्शनम् ।
शांकरं भजत शाश्वतं मतं
साधवः स इह साक्ष्युमाधवः ॥ ६३ ॥
असुरान्विजिगीषोः स्वयमद्वैतब्रह्मरत्नहरान् ।
विबुधेन्द्रस्य सखायो मरुत इव सन्त्विमे मुख्याः ॥६४॥

व्या०—मध्वजयतीर्थादिभिर्मुषितया युक्त्यसहिष्णुभिर्जीवब्रह्मणोः सविशेषाभिन्नगुणादिभिर्भेदवदवभासमानैः स्वकल्पितार्थैराच्छाद्य गोपितं तदीयनिर्युक्तिकाधिकरणानां मथनेनास्माभिः प्रत्याहृतमित्यर्थः । अत्रसदित्यत्र प्रकृतार्थे—अत्रेति सदिति च पदद्वयम् ॥ ६२ ॥

इत्थं मध्वदर्शनदूषणस्य तन्मतमर्यादयैवाद्वैतसिद्धेश्च मार्गप्रदर्शनमात्रं कृतम् । तच्च सद्भिरादरणीयमाप्तमूलत्वादित्याह——आद्रियध्वमिति । इह मध्वदर्शनमार्गप्रवृत्तिं त्यक्त्वा शांकरमतं तु शाश्वतं सेवनीयमित्यर्थे स एव गौरीपतिः साक्षी । यः स्वयमेव शंकराचार्यरूपेणाद्वैतं व्यवस्थापितवानिति "चतुर्भिः सह शिष्यैस्तु शंकरोऽवतरिष्यति" इत्याद्याप्तवचनेषु प्रसिद्ध इत्यर्थः ॥ ६३ ॥

एते श्लोकाः परविजयोन्मुखस्य परीक्षकस्य मुखवर्तितयोपकारकाः, पूर्वदेव विजयोद्युक्तस्येव सुपर्वनायकस्य नासीरवर्तितया मरुत इत्येतदाह—असुरानिति । असुराः खलु वैरोचनीमुपनिषदमाश्रिता देहात्मवादिनः प्राकृताः । परेऽपि

टि०— १ मध्वेति——वस्तुतस्तु मध्वाचार्यैर्मन्दाधिकारिण उद्दिश्य मुखतो द्वैतमभ्यधायि, न तु तेषां तत्र परमतात्पर्यं किंत्वद्वितीये ब्रह्मण्येव । अत एवोक्तं पूर्वश्लोकव्याख्याने—" त्वदीयतत्तदधिकरणमर्यादापर्यालोचनयैवाशेषोपनिषन्महातात्पर्यवेद्यं सच्चिदानन्दैकरसमद्वितीयं ब्रह्म सिद्धमिति । तेषां द्वैते परमतात्पर्यमुपेत्यैवमुक्तमिति विभावनीयम् ॥ ६२ ॥

२ वैरोचनीमिति—तथा हि छान्दोग्ये ( छा० ८ । ८ । ४ । ५ ) " स ह शान्तहृदय एव विरोचनोऽसुराञ्जगाम । तेभ्यो हैतामुपनिषदं प्रोवाचाऽऽत्मैवेह महय्य आत्मा परिचर्य आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकाववाप्नोति इमं चामुं चेति " ॥ ४ ॥ " तस्मादप्यद्येहाददानमश्रद्दधानमयजमानमाहुरासुरो बतेत्यसुराणां ह्येषोपनिषत्प्रेतस्य शरीरं भिक्षया वसनेनालंकारेणेति संस्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते " ॥ ५ ॥ " एवं श्रुतिप्रसिद्धासुरभावमाश्रिता वैरोचनाः । तथाऽपरेऽपि जीवानां विष्णोश्च सकलकर्मेन्द्रियज्ञानेन्द्रियदेहानभ्युपगच्छन्तस्तैरेव मुक्तौ भोगं च वदन्तोऽसुराश्चार्वाकाग्रेसरा इत्यसुरत्वेन रूपणं

विद्वद्गुरोर्विहितविश्वजिदध्वरस्य
श्रीसर्वतोमुखमहाव्रतयाजिसूनोः।
श्रीरङ्गराजमखिनः श्रितचन्द्रमौलि-
रस्त्यप्पदीक्षित इति प्रथितस्तनूजः ॥ ६५ ॥
सोऽयं मितपदमकरोन्महितार्थं मध्वशास्त्रमुखभङ्गम्।
प्रीत्यै पुरामरातेः श्रीकामाक्षीसमेतस्य ॥ ६६ ॥

इत्युपसंहारप्रकरणं समाप्तम् ॥

---

व्या०—जीवस्यैव करचरणादिसकलकर्मज्ञानेन्द्रियसहितदेहरूपत्वं तेनैव देहेन स्वप्ने मुक्तौ च व्यवहारानपि वदन्तो देहात्मवादिन इति साम्यादसुरशब्देनातिशयोक्त्या परे निर्दिष्टाः। मुख्याः—मुखे वदने भवाः सेनामुखवर्तिनश्च ॥ ६४ ॥

अथ स्वनाम ग्रन्थनाम च कीर्तयन् ग्रन्थसमाप्तिं दर्शयति—विद्वदिति। सोऽयमिति च।

इति श्रीभरद्वाजकुलजलधिकौस्तुभश्रीमदद्वैतविद्याचार्यश्रीविश्वजिद्या-
जिश्रीरङ्गराजाध्वरिवरसूनोरप्पय्यदीक्षितस्य कृति
र्मध्वतन्त्रमुखमर्दनं तद्व्याख्यानं मध्वमत-
विध्वसंनं च परिपूर्णतामगात् ॥

---

टि०— कृतम्। परेषां तथाऽभ्युपगमः "ब्राह्मेण जैमिनिरुपन्यासादिभ्यः" (ब्र० सू० ४।४।५) इत्यधिकरणभाष्यतत्त्वप्रकाशिकोदाहरणेन प्रदर्शित एव। परंतु ते स्वासुरभावमाच्छादयितुकामाः श्रुतिप्रामाण्यमभ्युपगच्छन्ति। तस्मात्प्रच्छन्नासुरभावत्वात्तेषां प्रच्छन्नचार्वाकत्वव्यवहारः। इदं च सौरपुराणोपन्यासेनोपक्रमप्रकरणे प्रपञ्चितमस्माभिः। दीक्षितवर्यैरपि "अतिशयोक्त्या परे निर्दिष्टाः" इत्यनेन स्पष्टीकृतमेवेति शिवम् ॥

श्रीमत्सह्याद्रिमध्ये विलसति विततो द्राविडैर्यः सुधीभिः
क्षीरारण्या( पालघाट्ट )ख्यदेशो गुणगणमहितो दर्शनात्पावनात्मा।
तस्मिन्नारामसेतोरपि विदितयशोभिस्तुषाराद्रिमूलाद्
ग्रामो मात्तूर( मात्तूर )मिख्यः सकलनयविदामग्रणीभिश्चकारित ॥ १ ॥

## सटिप्पणीकस्य सव्याख्यस्य मध्वतन्त्रमुखमर्दनस्य शुद्धाशुद्धपत्रम् ।

—·+×+·—

| अशुद्धम् । | शुद्धम् । | पुटे । | पङ्क्तौ । |
|---|---|---|---|
| टिप्पणी | टिप्पनी | १ | २ |
| गमः " इति | गम " इति | ४ | ५ |
| भक्ष्यमाण | भक्षमाण | ८ | २४ |
| पतिबलेन | पतिर्बलेन | ९ | ३ |
| ऊर्जपशू | ऊर्जं पशू | ९ | ६ |
| प्रेषितेन | प्रेरितेन | १० | २५ |
| सार्वणि | सर्वाणि | ११ | २० |
| न्तन्मत | न्स्तन्मत | १२ | ११ |
| ईक्षते | ईक्षतेः | " | १७ |
| करयोः | करणयोः | " | २५ |
| नुभावा | नुभवा | " | २६ |
| नित्यं स्फु | नित्यस्फु | १५ | ३ |
| नैतद्पेक्षि | नापेक्षि | १६ | ३ |
| यावेकावान्त | यावान्त | १९ | १७ |
| पूर्वपक्षः । न | पूर्वपक्षः, प्रत्यग्ब्रह्मणोरैक्यमिति विवरणमतेऽपि तथैव नाऽऽरम्भणीयमिति पूर्वपक्षः । न | २० | ७ |
| विंभूतं | विभूतं | २१ | २८ |
| ऽनारभ्य इति | ऽनारभ्यमिति | २२ | १३ |
| गतार्थं मतः | गतार्थं | " | १४ |
| वाच्या ब्रव्य | वाच्यस्य ब्रव्य | २४ | १८ |
| विशेषेऽपि | विशेषोऽपि | २५ | ४ |
| ऽप्ययम | ऽप्ययम | " | ७ |
| वृत्वेष्यते | वृत ब्रव्यते | " | ११ |

| अशुद्धम् । | शुद्धम् । | पुटे । | पङ्क्तौ । |
|---|---|---|---|
| ङ्गाच्चेति | ङ्गाच्च | २६ | १० |
| रोद्धुं शक्नोति | रोद्धुं न शक्नोति | ” | २० |
| नन्दतद्ब्र | नन्दवद्ब्र | २७ | १ |
| बिम्बवैचि | बिम्बावैचि | ” | १२ |
| नन्दस्यैव | नन्दस्येव | २७ | २४ |
| जनमिव | जलमिव | ” | २८ |
| ज्ञानस्य | ज्ञातस्य | २८ | ४ |
| विशेषता | विषयता | ” | ४ |
| तदा लोके | तदालोके | ” | २३ |
| दर्शितन्याय– | दर्शितन्यायै– | ” | २७ |
| वेदान्तानामिति | वेदान्तानामित्यादि | २९ | १७ |
| मेवोप | मेवौप | ३० | २१ |
| तादृशानेव | तादृशैरेव | ” | २२ |
| शिष्टम् । | शिष्टः । | ३१ | २२ |
| बह्वादान | बह्ववदान | ३२ | १४ |
| पत्तेश्च | पत्तेः | ३३ | १६ |
| विषय | विषम | ३६ | ३ |
| ब्रह्मनिषेध | ब्रह्मभेदनिषे | ३७ | १७ |
| पादकः “ ना | पादक “ ना | ” | २७ |
| षेधकः “ ने | षेधक “ ने | ” | २९ |
| मान एव | मानस्यैव | ३९ | २५ |
| शक्तिरङ्गी | शक्तेरङ्गी | ” | ३० |
| धेयता ” | धेयत ” | ४० | १७ |
| इति । सत्यं, | इति सत्यं, | ४३ | १० |
| यत्वेनाप | यत्वेन प | ५० | १० |
| एवमन्याऽपि | एवमन्योऽपि | ५१ | २३ |

| अशुद्धम् । | शुद्धम् । | पृष्ठे । | पङ्क्तौ । |
|---|---|---|---|
| देशाद्यान्ये " | देशाद्यान्य " | ५५ | १५ |
| प्राण्यप्रापक | प्राप्यप्रापक | ५६ | २१ |
| उपजीव्यं | उपजीव्य | " | २५ |
| ब्रह्मणैश्वर्यं | ब्रह्मण ऐश्वर्य | ५७ | ९ |
| सन्धास्या | सन्धानस्या | ५९ | १२ |
| नाप्रयोजकत्वं | नचाप्रयोजकत्वं | " | २५ |
| तदभावे | तदभावं | ६४ | १७ |
| स्तत्क | स्त्वत्क | ७० | २७ |
| मलापश्च | मलोपश्च | ७१ | २४ |
| करूपरूप्य | करूप्य | ७४ | १७ |
| संसिद्धबु | संसिद्धिबु | ७६ | १ |
| एव | एकः | " | ३ |
| धीतत्व | धीनत्व | ८४ | २० |
| बन्धत्वा | बन्धनत्वा | ८८ | ६ |
| पूर्णत्वं स | पूर्णत्वं न स | ९१ | १२ |
| पेक्षतया | पेक्षया | " | १५ |
| स्योत्तमत्वस्य | स्योत्तमत्वाभावस्य | " | २४ |
| न्मास्त्येव | न्नस्त्येव | ९२ | २ |
| लेऽद्रत्व | लेढृत्व | ९३ | २८ |
| त्याधिकं | त्यादिकं | ९५ | २८ |
| शक्त्याऽपि | शक्त्या अपि | ९६ | ७ |
| बुद्धाश्श्रावक | बुद्धाश्शावक | ९७ | १० |
| श्रममूल | भ्रममूल | १०३ | २७ |
| नीयम् । ब्रह्म | नीयं ब्रह्म | १०४ | १ |
| नीति प्रायः | नीति । प्रायः | " | २ |
| शिथिलैव | शिथिला एव | १०६ | २० |
| मत्राधिकरणे | मत्रधिकरणे | ११४ | ११ |
| प्रतिरस्ती | प्रतिश्रुतिरस्ती | ११५ | १९ |

| अशुद्धम् । | शुद्धम् । | पुटे । | पङ्क्तौ । |
|---|---|---|---|
| पाधानित्वस्य | पाधीनत्वस्य | ११८ | २४ |
| दोषरहितत्वाच्च | दोषत्वाच्च | ११९ | २ |
| निमित्तं | निमित्तत्वं | ,, | २३ |
| विशेष्यवद्विशेषण | विशेषणवद्विशेष्य | ,, | २९ |
| दिश्यतम् | दिश्यताम् | १२० | ११ |
| ष्टचनिरासः | ष्टयं च निरस्ये | १२५ | २० |
| व्यध्वनं | व्यध्वगं | १२८ | २ |
| तथाऽपरे | तथा परे | ,, | २९ |

